अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ८१.

# श्रीयाज्ञवल्क्यस्मृतिः

श्रीविश्वरूपाचार्यप्रणीतया
बालक्रीडाख्यया व्याख्ययोपेता

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण
लण्डनपुरस्थराजकीयैष्याखण्डीयविद्यासेवकसमाजपूज्यसभ्यपदभाजा
पिहेच्. डि. (ट्टबिङ्गन्) पदसत्कृतेन
**महामहोपाध्यायेन**
**त. गणपतिशास्त्रिणा**
संशोधिता ।

---

**द्वितीयो भागः — प्रायश्चित्ताध्यायः ।**

सा च
अनन्तशयने
महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशिता ।

कोलम्बाब्दाः १०९९, क्रैस्ताब्दाः १९२४.

# प्रकरणानुक्रमणी ।

# विषयानुक्रमणी।

विषयाः

## १. आशौचप्रकरणे —

विषयाः | पृष्ठम्
---|---

| विषयाः | पृष्ठम् |
|---|---|

| विषयाः | पृष्ठम् |
|---|---|
| गुर्वर्थे व्यापृतस्य ब्रह्मचारिणो विपत्तौ गुरोः | १६५ |
| गुरोः प्रतिकूलाचरणे | " |
| उपकारार्थौषधादिदाने कृते व्यापत्तौ प्रत्यवायाभावकथनम् | १६६ |
| मिथ्याभिशंसने प्रायश्चित्तम् | " |
| अभिशस्तस्य प्रायश्चित्तम् | १६७ |
| नियोगादृते भ्रातृभार्यागमने उदक्यागमने च प्रायश्चित्तम् | " |
| असत्प्रतिग्रहे प्रायश्चित्तम् | " |
| व्रात्ययाजनेऽभिचरणे वेदनाशने शरणागतपरित्यागे च प्रायश्चित्तम् | १६८ |
| खरादियुक्तयानगमनादौ प्रायश्चित्तम् | " |
| गुरुविप्रादीनां मानहानिकराभाषणाभिभवनादौ प्रायश्चित्तम् | " |
| विप्रदण्डोद्यमे प्रायश्चित्तम् | " |
| विप्रे दण्डनिपातने प्रायश्चित्तम् | " |
| विप्रदेहादसृक्पातने प्रायश्चित्तम् | " |
| आभ्यन्तरशोणितोत्पादने प्रायश्चित्तम् | " |
| सर्वत्राधिकार्यपेक्षं प्रायश्चित्तम् | १६९ |
| पतितस्य घटनिनयनम् | " |
| चरितव्रतस्य तस्य पुनः संग्रहणम् | " |
| पतितानां स्त्रीणां घटापवर्जने विशेषः | १७० |
| स्त्रीणां विशेषपतनीयानि | " |
| कृतप्रायश्चित्तानामपि केषाञ्चिदसंव्यवहार्यत्वम् | " |
| रहस्यप्रायश्चित्तानां विषयः | १७१ |
| ब्रह्महत्यारहस्यप्रायश्चित्तम् | १७२ |
| साग्निकस्य ब्राह्मणवधे पूर्ववैकल्पिकत्वेन प्रायश्चित्तान्तरविधिः | " |
| सुरापस्वर्णहारिणोः रहस्यप्रायश्चित्तम् | " |
| गुरुतल्पगस्य तत् प्रायश्चित्तम् | १७३ |
| प्राणायामशतेन उपपातकादिसर्वपापापनोदकथनम् | " |
| द्विजस्य रेतोविण्मूत्रप्राशने प्रायश्चित्तम् | १७४ |

---

॥ श्रीः ॥

# श्रीयाज्ञवल्क्यस्मृतिः

## श्रीविश्वरूपाचार्यप्रणीतया बालक्रीडाख्यया व्याख्ययोपेता ।

---

(प्रायश्चित्ताध्यायः ।)

---

### अथाशौचप्रकरणम् ।

श्रियामव्यभिचरितनिर्व्याजप्राप्तिहेतुतया कण्टकोद्धरणं राजधर्मत्वेनानेकधा व्यवहारप्रकरणे विप्रकीर्णतयोक्तम् । सर्ववर्णानां चाश्रमद्वयसाधारणो धर्म उक्तः । अथेदानीमाश्रमान्तरं प्रसक्तमप्युत्क्रम्य पूर्वाश्रमशेषभूतां प्रेतशुद्धिमेव तावत् प्रस्तौति । कस्मात्पुनः प्रसक्तमप्याश्रमान्तराभिधानमुत्क्रम्यते । वर्णमात्रसंबन्धितयाप्युच्यमाना प्रेतक्रिया तद्व्यतिरेकेणैव यथा स्यात्, प्रतिपत्त्यन्तरं च तच्छरीरस्यारण्यनयनादि । यथोक्तम्—"एतद्वै परमं तपो यत्प्रेतमरण्यं नयन्ती"ति । तदधुना वयोवस्थाविशेषेणैव तावत् प्रेतक्रियामाह—

**ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः ।**
**आ श्मशानादनुव्रज्य इतरो ज्ञातिभिर्मृतः ॥ १ ॥**

ऊनद्विवार्षिको मृतः खात्वा गर्ते निखातव्यः । न दाहाद्युदकक्रिया कार्या । यतश्चोदकक्रियानिवृत्तिस्तत एव ज्ञातिभिर्नानुगन्तव्य इत्यर्थः । इतरस्तूर्ध्वं वर्षद्वयादा श्मशानादनुगन्तव्यः । दाहाद्युदकक्रिया तस्य कार्येत्यर्थः । यत्तु स्वायंभुवम्—

"ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः ।
अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते ॥
नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रिया ।
(निवृत्तिस्तत एव ज्ञातिभिः !)
अरण्ये काष्ठवत् त्यक्त्वा क्षपेयुस्त्र्यहमेव तु ॥"

इति । तदाशौचकालविशेषविधानार्थम् । एतदनुसाराच्च निदध्युरिति निखननमेव तत्राभिप्रेतम् । यत्पुनस्तत्रैवोक्तं—

G. P. T. 3241. 500-14. 8. 97.

"नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्युर्नाम्नि वापि कृते सति ॥"

इति । तदेतद् वैकल्पिकत्वेन कृतनामकदेहदाहादिविधानपरतयैवावसेयम् । पारस्करीयं तु "द्विवर्षे प्रेते मातापित्रोरेवाशौचम्" इति तदनुगमनाङ्गत्वादङ्गस्पर्शाभिप्रायं द्रष्टव्यम् । यत्तु स्वायम्भुवे —

"नृणामकृतचौलानामशुद्धिर्नैशिकी स्मृता ।"

इति , तदूर्ध्वं नामकरणात् प्राक् संवत्सराद् विज्ञेयम् । परतस्तु कृतचौलस्याकृतचौलस्य वा त्रिरात्रमेव प्रागुपनयनात् । तथाचोक्तं —

"निर्वृत्तचौलकानां तु त्रिरात्राच्छुद्धिरिष्यते ।"

इति । वाक्यद्वयारम्भस्तु व्यवस्थया दाहविकल्पार्थः । नामकरणाच्चोर्ध्वं वर्षद्वयं दाहविकल्पः । परतस्तु नैयमिको दाहः । स्पष्टमन्यत् ॥ १ ॥

यस्य च[2] दाहाधिकारः —

**यमसूक्तं तथा गाथा जपद्भिर्लौकिकाग्निना ।**
**स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् ॥ २ ॥**

यमदेवत्यं सूक्तं, तथा यमदेवत्या गाथा एकशो ब्राह्मणपठिताः, तदुभयं जपद्भिर्ज्ञातिभिः । स दाहाधिकृतः । इतरो लौकिकाग्निना दग्धव्यः । उपेतः उपनीतः । स चाहिताग्निसंबद्धेतिकर्तव्यतया । अर्थवद् अनर्थलुप्ततया । यथासम्भवं दग्धव्यः । स्मृत्यन्तरात्तु[3] मन्त्रनिवृत्तिः । शालाग्निना च विद्यमानत्वे दाहः ॥ २ ॥

एवञ्च यथाधिकारं दग्ध्वा ततः —

**सप्तमाद् दशमाद् वापि ज्ञातयोऽभ्यवयन्त्यपः ।**
**अप नः शोशुचदघमनेन पितृदिङ्मुखाः ॥ ३ ॥**

आ सप्तमात् पुरुषात् सापिण्डतया प्रतिबद्धा आ दशमाद्वा समानोदकत्वेन ज्ञातयः स्नानाद्युदकक्रियानिमित्तमपोऽवतीर्य "अपनश्शोशुचदघमित्यनेन दक्षिणामुखाः स्नानं कुर्युः । अभ्यवयन्तीति चोद्वर्षणादिप्रतिषे-

---

१. 'याव', २. 'तु', ३. 'तु नि', ४. 'यार्थम' ग. पाठः.

धेन सकृदाप्लवनमात्रार्थम् । तथाच शङ्खः —"दक्षिणामुखा अपोऽवतीर्य सकृदाप्लुत्य नोद्धर्षणं कुर्युरि"ति । यत्त्वन्यत्र "जन्मनाम्नोरवेदन" इति समानोदकविधत्वेनोक्तं, तद् दशपुरुषवचनानुसारेणौचित्यानुवादमात्रतयावसेयम् ॥ ३ ॥

समानोदकत्वाभावेऽपि हि यथा ज्ञातीनाम् —

**एवं मातामहाचार्यप्रेतानां चोदकक्रिया ।**
**कामोदकं सखिप्रत्तास्वस्त्रीयश्वशुरर्त्विजाम् ॥ ४ ॥**

मातामहादीनामप्येवमेवोदकक्रिया कार्येत्यर्थः । अपरिणीतादत्ताश्च कुमार्यः प्रत्ताः, भ्रात्रादिपत्न्यो वा । सख्यादीनां तु कामोदकमिति । इच्छया तूदकं कार्यमित्यर्थः । प्रत्ताशब्दश्चात्र स्ववासिनीवचनः । स्पष्टमन्यत् ॥ ४ ॥

ये चामी ज्ञातय उदकक्रियार्थमपोऽवतीर्णाः, ते स्नात्वा स्मृत्यन्तरानुसाराच्च संयुक्ता-श्चाभ्यनुज्ञाताः —

**सकृत् प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः ।**

स्पष्टार्थमेतत् ॥

सपिण्डत्वेऽपिच —

**न ब्रह्मचारिणः कुर्युरुदकं पतिता न च ॥ ५ ॥**

ब्रह्मचारिपतितशब्दौ च स्मृत्यन्तरानुसाराद् वनस्थादिपाषण्डादिलक्षणत्वेन यथायोगं द्रष्टव्यौ ॥ ५ ॥

कर्तृत्वेनापवादमुक्त्वेदानीं निमित्तत्वेनापवादमाह —

**पाषण्डमाश्रिताः स्तेना भर्तृघ्न्यः कामगास्तथा ।**
**सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः ॥ ६ ॥**

तथाशब्दः स्मृत्यन्तरोक्तवृथासङ्करजाताद्यर्थः । पाषण्डादीनां निमित्तत्वेनाशौचभाक्त्वप्रतिषेधाद् ब्रह्मचार्यादीनां कर्तृतामात्रेणैव प्रतिषेधोऽवसेयः । स्पष्टमन्यत् ॥ ६ ॥

---

१. 'ष्वा' क. ङ. पाठः.

ये त्वधिकृता ज्ञातयः—

कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान् ।
स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥ ७ ॥

कृतोदकान् पुनः स्नातानन्ये लोकयात्रिका यथोक्तदेशसंस्थितान् दुःखोपशमनार्थमपवदेयुस्तानभिमन्युवधादिभिरितिहासैः पुरावृत्तैश्चेतरमनुष्यसंबद्धैः ॥ ७ ॥

एतमेवापवादं प्रपञ्चयति—

मानुष्ये कदलीस्तम्भनिस्सारे सारमार्गणम् ।
करोति यः स संमूढो जलबुद्बुदसन्निभे ॥ ८ ॥

किंच—

पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः ।
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥ ९ ॥

पश्य—

गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥ १० ॥

किंच—

श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यं स्यात् क्रियाः कार्याश्च शक्तितः ॥ ११ ॥

प्रेतमुद्दिश्य स्वचोदनानुसारेणेति शेषः ॥ ११ ॥

अनया दिशा लोकयात्रिकैरपवदनायोक्ते साध्वेवैभिरुक्तम्—

इति सञ्चिन्त्य गच्छेयुर्गृहान् बालपुरोगमाः ।

बालानग्रतः कृत्वा यत्र प्रेतस्तद्गृहद्वारं यावद् गत्वा ततः—

विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥ १२ ॥

विदश्य दन्तैरवखण्ड्येत्यर्थः ॥ १२ ॥

---

१. 'म्ब' क. ङ. पाठः.

अभ्यवहाराभावेऽपि च —

**आचम्याथाग्निमुदकं गोमयं गौरसर्षपान्।**
**प्रविशेयुः समालभ्य कृत्वाऽश्मनि पदं शनैः ॥ १३ ॥**

यथाकनिष्ठमेवेति शेषः। अग्न्यादीनां च मङ्गलार्थत्वात् संशब्दाच्च समुचितानामेवालम्भनम्। स्पष्टमन्यत् ॥ १३ ॥

स्मृत्यन्तराच्च गृहं प्रविश्यार्धप्रस्तरे त्र्यहमनश्नन्त आसीरन्। तदशक्तौ तु—

**क्रीतलब्धाशिनो भूमौ शयीरंस्ते पृथक् पृथक्।**

किञ्च —

**पितृयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ॥ १४ ॥**

त्रिरात्रावधित्वेन क्रीत्वा संव्यवहारादिना वा लब्ध्वाश्नीयुः। एकशश्च ब्रह्मचारिणो भूमौ शयीरन् स्वपेयुः। पुत्रादीनां च यथाधिकारं प्रत्यासत्त्यनुसारादेतेनैव पितृयज्ञोक्तावनेजनादीतिकर्तव्यतया श्राद्धमकृत्वैव प्रेतायान्नं देयम्। प्रेतमेवोद्दिश्य "प्रेतात्र स्वाहि" इत्यनेन मन्त्रेण ॥ १४ ॥

**जलमेकाहमाकाशे स्थाप्यं क्षीरं च मृन्मये।**

पात्र इति शेषः ॥

सत्यपि चाशौचनिमित्तेऽनधिकारे सर्वैर्ज्ञातिभिः—

**वैतानिकाश्रयाः कार्याः क्रियाश्च श्रुतिनिर्देशात् ॥ १५ ॥**

स्पष्टार्थमेतत् ॥ १५ ॥

यत्रोक्तम्— "आचम्याथाग्निमुदकम्" इति, तत्र—

**प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि।**
**इच्छताम्**

समानमितरैः। इच्छतामिति छेदः ॥

**तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात् ॥ १६ ॥**

परेषां प्रेतवाहकव्यतिरिक्तानुगन्तॄणामसमानोदकानाम्। वक्ष्यमाणस्नानसंयमनाभिस्पर्शनादेस्तत्क्षणात् सद्य एव शुद्धिरित्यर्थः। कटधार-

1. 'घं' क. ग. पाठः.

णानिच्छायां तु प्रेतवाहकानां पारस्करोक्तं "प्रेतस्पृशो ग्रामं न प्रविशेयुरा नक्षत्रदर्शनाद्रात्रौ चेदादित्यस्य" इति । दृष्टस्नेहकारणाभावे तु प्रेतवाहकानां सद्यः शौचं पराशरोक्तम्—

"अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदे पदे यज्ञफलमानुपूर्व्याल्लभन्ति ते ॥
न चैषामशुभं किञ्चित्पापं वा शुभकर्मिणाम् ।
जलावगाहनात्तेषां सद्यः शौचं विधीयते ॥"

इति[2] ॥ १६ ॥

स्नेहादिनापि तु—

**आचार्योपाध्यायपितॄन् निर्हृत्यापि व्रती व्रती ।**
**स कटान्नं च नाश्नीयान्न च तैः सह संवसेत् ॥१७॥**

आचार्यमुपाध्यायं मातापितरौ वा निर्हृत्यापि प्रेतधर्मेण व्रती ब्रह्मचारी व्रत्येव व्रतान्न हीयत इत्यर्थः । अयं त्वस्य विशेषः— कटान्नं नाश्नीयात् तैश्च सपिण्डादिभिः सह न संवसेत् । एतस्मादेव चान्यत्र व्रतहानिरिति गम्यते । आचार्यादिसपिण्डैस्तु सह कटधारणादि न कुर्यात् तत्करणे व्रतलोप एवेत्यभिप्रायः ॥ १७ ॥

उदकक्रियाधिकृतानामपि[3] सपिण्डसमानोदकानां यथायोगं—

**दशरात्रं त्रिरात्रं वा शावमाशौचमुच्यते ।**
**ऊनद्विवर्षमुभयोः सूतकं मातुरेव हि ॥ १८ ॥**

दशरात्रं सपिण्डानां त्रिरात्रं समानोदकानाम् । वाशब्दश्चोभयत्र स्मृत्यन्तरोक्तचतुरहपक्षिण्यादिकल्पानुसारेण यथायोगं विकल्पार्थः शवनिमित्तोऽशुचिभावः[5] शावमाशौचम् । ततश्च प्रागेव संस्कारान्मरणप्रभृति दशरात्रमिति केचित् । तद् उच्यत इति वदन्नाचार्यो निराकरोति । कृतोदकानामपवदनानन्तरमन्यैर्लौकयात्रिकैः शावमाशौचं प्रति सपिण्डादिभिः पृष्टैर्दशरात्रादिकल्पेन क्रियतामित्येवमुच्यत इत्यभिप्रायः । ततश्च संस्काराद्येव स्यात् । तदभावे तु स्मृत्यन्तरान्मरणाद्येवेति व्यवस्था । अनुच्यमानमपि तु ऊनद्विवार्षिकमुभयोः सपिण्डसमानोदकयोस्तुल्यकल्पमेव ।

१. 'हादिका', २. 'ति । दृष्टस्ने', ३. 'नां स' ग. पाठः. ४. 'ल्पनानु' ङ. पाठः. ५. 'त्तकोऽशु' ङ. पाठः.

स्यादिति शेषः । सूतकं तु मुख्यवृत्त्या मातुरेव यस्मात् तस्मात् तदनुसारेणैव गर्भस्रंसनादौ गर्भमासतुल्यरात्रादिकल्पस्तदर्थतयैव योज्य इत्यभिप्रायः । यद्वा अयमङ्गस्पर्शावधिविधानार्थः श्लोकः । शूद्रादिक्रमेण ब्राह्मणान्तानामात्मीयाशौचकल्पतृतीयांशत्वेन दशरात्रादिनाङ्गस्पर्शः । ततश्च दशरात्रं शूद्रस्य ब्राह्मणस्य त्रिरात्रम् । वाशब्दात् पञ्चरात्रं चतूरात्रं वैश्यराजन्ययोः शववदङ्गस्पर्शाभावेनाशौचमुच्यते । ऊनद्विवार्षिकं चोभयोर्मातापित्रोरेवाशौचत्रिभागत्वेनात्मीयाशौचकल्पतृतीयांशत्वेन दशरात्रादिनाङ्गस्पर्शाभावः । सूतकं तु मातुरेव । तथाच वसिष्ठः —

"नाशौचं सूतके पुंसः संसर्गं चेन्न गच्छति ।
रजस्तत्राशुचिकरं तच्च पुंसि न विद्यते ॥"

इति ॥ १८ ॥

इदानीमाशौचकालपरिमाणमाह —

**ब्राह्मणस्य दशाहं तु भवति प्रेतसूतकम् ।**
**क्षत्रस्य द्वादशाहानि विशां पञ्चदशैव वा ॥ १९ ॥**
**त्रिंशद् दिनानि शूद्रस्य प्रेतसूतकमुच्यते ।**
**अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यति ॥ २० ॥**

ब्राह्मणस्य दशाहं तु इत्यधिकनिवृत्त्यर्थस्तुशब्दः । प्रेतं च सूतकं च प्रेतसूतकं, प्रेतत्वनिमित्तं जन्मनिमित्तं च दशरात्रावधि ब्राह्मणस्याशौचं भवतीत्यर्थः । विशां पञ्चदशैव वेति वाशब्दः स्मृत्यन्तरोक्तावध्यन्तरविकल्पार्थतया सर्वत्राविशेषेण द्रष्टव्यः । शूद्रसम्बन्धितया च पुनः प्रेतसूतकवचनमशूद्राणां वर्णापशदानां निवृत्त्यर्थम् । जन्ममरणयोश्च समानजातीयत्वेन पुनरन्तरा जन्ममरणे पूर्वाशौचकालशेषेणैव शुद्धिः । तथाच स्मृत्यन्तरं — "जन्ममरणयोस्तुल्योपनिपातश्चेद् आ त्रिरात्रशेषणात् पूर्वेणैव शुद्धिः, न्यूने त्रिरात्रपूरणं, पुरोदयादन्त्ये त्रिरात्रमुदिते तु यथोक्तमि'ति । स्पष्टमन्यत् ॥ १९, २० ॥

---

1. 'वकरणम् । सू' क. ङ. पाठः.

किञ्चान्यद्—

**गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम् ।**
**प्रोषिते कालशेषः स्यात् पूर्णे दत्त्वोदकं शुचिः ॥२१॥**

गर्भस्रावे माससंख्याताहोरात्राणि चाशौचम् । एतच्च मातृविषयमेव । सपिण्डानां तु त्रिरात्रमेव, वसिष्ठवचनात्—"गर्भपतने सपिण्डानां त्रिरात्रमाशौचमि"ति । प्रोषिते ज्ञाते ज्ञानप्रभृत्यवशिष्टकालमाशौचं स्यात् । पूर्णे तु दशरात्रादावाशौचकाले दत्त्वोदकमुदकदानसम्बन्धिविहितत्रिरात्रेणैव शुचिः स्यात् । यद्वा स्मृत्यन्तरानुसारात् पूर्णे संवत्सरे दत्त्वोदकं सद्यः शौचमिति योज्यम् ॥ २१ ॥

अविशेषेणैव तु सर्ववर्णानाम्—

**अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ।**
**गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च ॥ २२ ॥**

अहःशब्दोऽहोरात्रवचनः, अनन्तरश्लोके तदहरिति तन्मात्रार्थं पुनर्वचनात् । अहस्त्वदत्तकन्यास्वित्यद्भिर्वाचा च यद् दानं, तदपेक्षयावसेयम् । तुशब्दः कल्पान्तरार्थः प्रत्तादिविषयत्वेन । अन्तेवासी शिल्पशिष्यः । तत्सन्निधियोगाच्च तद्गुरावेव गुरुशब्दः । अनूचानः अनुवक्तैवोपाध्यायः । मातुलो मातुः सोदर्यः श्रोत्रियश्चानुपसम्पन्नः, अनाश्रितप्रातिवेश्यादिरित्यर्थः । मुख्यगुर्वादीनां तु स्मृत्यन्तरोक्तं द्रष्टव्यम् ॥ २२ ॥

सर्ववर्णा[1]वैशेषिकत्वे[2]नैव च—

**अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ।**
**निवासराजनि तथा तदहः शुद्धिकारणम् ॥ २३ ॥**

अनौरसवचनं बीजक्षेत्रसम्बन्धव्यतिरेकपरत्वाद् दत्तकादिविषयं द्रष्टव्यम् । भार्यात्वेनान्यसम्बद्धा[3]सु । आगतासु अवरुद्धास्विति यावत् । निवासहेतुभूते न्यायवृत्ते क्षत्रिये राजनि । तथाशब्दादेवमाद्युक्तप्रकारनिश्चयः । एषां विपत्तौ तदेवाहः शुद्धिकारणं, नाहोरात्रमित्यर्थः ॥ २३ ॥

---

१. 'र्णानामवै', २. 'व—अ ग. ३. 'न्धा' क. ग. पाठः.

सपिण्डतयैव प्राप्तस्य यथोक्ताशौचकल्पस्यापवादार्थमाह—

**गोनृपब्रह्महतानामन्वक्षं चात्मघातिनाम् ।**
**प्रायो[1]नाशकशस्त्राग्निविषाद्यैरिच्छतां स्वयम् ॥ २४ ॥**

गवादिभिरनिच्छतामपि व्यापादितानामन्वक्षमाशौचं स्यात् । अक्षमिन्द्रियं तदुपलब्धिवृत्त्या, यावद्दर्शनमित्यर्थः । ततश्चादर्शनाच्छुद्धिः । अशुद्धिवचनाच्च दर्शनमप्यकर्तव्यमेवेति ज्ञापयति । प्रायादिभिश्च स्वयमिच्छतामात्मव्यापादनेऽन्वक्षमेव । स्वयमिति वचनं ब्राह्मणाद्यर्थनिवृत्त्यर्थम् । प्रायो महापथगमनम् । आम्नायश्चेच्छयैव ज्ञप्त्यर्थमात्मव्यापादनाभ्युपगमं दर्शयति — "यद्यु मा मारयिष्यति यज्ञं विकृष्टमनुविकृक्ष्य" इत्यादि ॥ २४ ॥

कार्यान्तरोपरोधाच्च—

**महीपतीनां नाशौचं हतानां विद्युता तथा ।**
**गोब्राह्मणार्थे संग्रामे यस्य नेच्छति भूमिपः ॥ २५ ॥**

महीपतीनां राज्ञां पालनार्थमाशौचाभावः । तदर्थं यस्याशौचाभावमिच्छति राजा प्राड्विवाकादेः, तस्याप्याशौचाभावः । विद्युदादिहतानां तु निर्दोषत्वे[2]ऽपि वचनाद्, गोब्राह्मणाद्यर्थे त्वभ्युदयातिरेकादेवेत्यवगन्तव्यम् ॥ २५ ॥

अनुगन्तृणां त्विदानीमाह —

**ब्राह्मणेनानुगन्तव्यो न शूद्रो हि मृतः क्वचित् ।**

क्वचिदित्यापद्यप्यननुगमार्थम् ॥

यस्त्वनुगन्तव्यो ज्ञातिरज्ञातिर्वा सजातीयः, तत्रापि —

**अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं[4] घृतभुक्**

अम्भोवचनं बहिः स्नानक्रियार्थम् । स्पष्टमन्यत्

सपिण्डत्वेऽपि च —

**ऋत्विजां दीक्षितानां च याज्ञे कर्मणि कुर्वताम् ।**
**सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥ २७ ॥**

१. 'यो', २. 'पि च व', ३. 'व्यः । अ', ४. 'ग्नीन् घृ' गं. पाठः.

**दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।**
**आपद्यपि च कष्टायां सद्यःशौचं विधीयते ॥ २८ ॥**

ऋत्विग्दीक्षितवचनं वरणदीक्षामात्रप्रवृत्त्यैव प्रागेव यज्ञारम्भादाशौचनिवृत्त्यर्थम् । याज्ञे कर्मणि कुर्वतामिति अनृत्विजामपि चमसाध्वर्य्वादीनां परिग्रहार्थम् । सत्री प्रसिद्धः । आदिष्टप्रायश्चित्ती व्रती । ब्रह्मचारी उपकुर्वाणको नैष्ठिकश्च । दाता सततप्रवृत्तहिरण्यादिदानः । ब्रह्मवित् तादर्थ्याधिकारात् परिव्राजकः, तदुपासनैकनिष्ठो वा । तथाशब्दो वनस्थाद्यर्थः। दानादौ च तत्सम्बन्धब्राह्मणाभिमुख्यकरणाद्यङ्गेन प्रस्तुते राष्ट्रभङ्गादौ च देशविप्लवे अन्यस्यां वा निर्व्याजकष्टायाम् आपदि । सद्यःशौचं विधीयत इति विचिकित्सानिवृत्त्यर्थम् ॥ २७, २८ ॥

एवं शावाशौचमभिधायेदानीं सूतकाश्रयं विशेषापवादमाह—

**पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनाद् ध्रुवम् ।**
**तदहर्न प्रदुष्येत पूर्वेषां जन्मकारणात् ॥ २९ ॥**

मातापित्रोर्बीजशोणितसम्बन्धादङ्गस्पर्शायोग्यत्वकरं सूतकं, न पुनः सपिण्डानामपि, तदसम्भवात् । एवञ्चेन्मातुरेव, तदसृग्दर्शनात् । ध्रुवं निश्चितमित्यर्थः । तथाच स्वायम्भुवं —

> "सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम् ।
> सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ॥"

इति । शावशब्दोऽङ्गस्पर्शाभावप्रतिपत्त्यर्थः । यदपि चान्यत् सापिण्डसामान्यं दानाद्यनधिकारलक्षणमाशौचं तदपेक्षयापि यस्मिन्नहनि पुत्रो जातस्तदहर्न प्रदुष्येत । किमर्थम् । पूर्वेषां पित्रादीनां पितॄणां जन्मकारणात् । जन्मनि श्राद्धकारणादित्यर्थः । प्रशब्दाच्च भोक्तॄणामप्यदोष इति गम्यते ॥ २९ ॥

---

१. 'भृत्यैव' क. ग. पाठः. २. 'त्र', ३. 'दभावा' ४. 'पिच य' ग. पाठः. ५. 'तृ' क. ङ. पाठः. ६. 'नः', ७. 'णत्वादि' ग. पाठः.

अयं तु सामान्येन पुरुषमात्रधर्मः—

**उदक्याशौचिभिः स्नायात् संस्पृष्टस्तैरुपस्पृशेत् ।**
**अब्लिङ्गाभिर्जपेच्चैव सावित्रीं मनसा सकृत् ॥ ३० ॥**

उदक्या रजस्वला, आशौचिनोऽङ्गस्पर्शानर्हाः, तैः स्पृष्टः स्नायात् । कामतस्तु सङ्गम्य तैः स्पृष्टोऽब्लिङ्गाभिः 'आपो हि ष्ठा' इत्यादिभिः स्नात्वोपस्पृशेत् । आचामेदित्यर्थः । आचम्य सावित्रीं मनसा सकृज्जप्त्वा शुध्यतीत्यवसेयम् ॥

इदं त्वत्र चिन्त्यम्— अनेकधा विरोधिनामाशौचवाक्यानां कथं विषयकल्पनेति । तद्यथा— स्वयम्भुवा "दशाहं शावमाशौचमि"त्यत्र चत्वारः कल्पाः प्रदर्शिताः । दशाहः, तथा "आ वा सञ्चयनादस्थ्नाम्" इत्यनेन चतुरहः, "त्र्यहमेकाहमेव वे"त्यनेन[1] त्र्यहैकाहौ । तथा पराशरेण—

"ब्राह्मणस्य त्रिरात्रं तु शावमाशौचमुच्यते ।
क्षत्रियस्य दशाहानि वैश्यस्यैकादशैव तु ॥"

इति । गौतमेनापि[2] — "शावमाशौचं दशरात्रमनृत्विग्दीक्षितब्रह्मचारिणां सपिण्डानामि"त्युपक्रम्य एकादशरात्रं क्षत्रियस्य द्वादशरात्रं वैश्यस्येत्युक्तम् । वसिष्ठेनाप्युक्तं—"ब्राह्मणो दशरात्रेण पञ्चदशरात्रेण क्षत्रियो वैश्यो विंशतिरात्रेण" इति । शूद्रस्य तु मास एव सर्वत्रोक्तः । तत्र केचिच्छ्लोकान्तरारम्भसामर्थ्याद् वृत्तस्वाध्यायाद्यपेक्षया विषयव्यवस्थां वर्णयन्ति—

"एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः"

इत्यादि । तत्तु नातीव सम्यक् । यदि हि वृत्ताद्यपेक्षयैकाहाद्युच्येत, तदा

"उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्तते ॥"

इत्याद्यनुपपन्नमेव स्यात् । गौतमोऽपि च दीक्षितादिपर्युदासेन दशरात्रं विदधद् वृत्तादिमतामेवैतदिति ज्ञापयति । एवं सर्वस्मृत्यन्तरेषु स्वाध्यायाद्यनधिकार एवाशौचं, तद्धीनस्य च स्वभावसिद्धोऽनधिकार इति कि-

१. 'ति त्र्य' क. ङ. पाठः. २. 'पि च शा' ग. पाठः.

माशौचं करिष्यति । तथा दक्षेण सद्यःशौचादिदशपक्षं सूतकं प्रक्रम्योक्तं—

"व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा ।
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः ।
श्रद्धात्यागविहीनस्य भस्मान्तं सूतकं भवेत् ॥"

इति । एवञ्जातीयकानां स्वभावसिद्धानामा मरणादनपाय्येवाशौचं, नाशौचविधिविषयभाक्त्वमेषामित्यभिप्रायः । कथं तर्ह्ययं श्लोकः—"एकाहाच्छुध्यते विप्र" इति । निन्दार्थवादत्वेन भस्मान्तसूतकवचनवदेतदपि वृत्तादिप्रशंसामात्रार्थं प्रक्रमानुसारात् स्मृत्यन्तराद् न्यायविरोधाच्च द्रष्टव्यम् । नहि वेदरहितस्याग्निसंयोगोऽस्ति । स्तुत्यर्थतायां त्वविरोधः । एवं पाराशर्यमपि—

"नामधारकविप्राणां दशाहं सूतकं भवेद्"

इत्यादि योज्यम् । अन्ये तु

"दन्तजातेऽनुजाते च कृतचौले च संस्थिते"

इत्येतच्छ्लोकानुसारेण[२] वयोवस्थापेक्षया व्यवस्थामाहुः । जाता दन्ता यस्य स दन्तजातः, तमनु पश्चाद् यो जातः सोऽनुजातः नामकरणादूर्ध्वं (स्यात् ? ) प्राग् दन्तजननात् । परतो न्यूनत्रिवर्षो दन्तजातः । परतस्तु प्रागुपनयनात् कृतचौलः । चशब्दाच्च कृतोपनयनः । तेषु कृतोपनयनादिषु संस्थितेषु दशाहादिकल्पव्यवस्थेति । तदेतत् कृतचौले त्रिरात्रविधानादितरत्रापि च यथायोगं वचनान्तरारम्भसामर्थ्यादयुक्तमेव । स्वबुद्ध्यनुसारिण्यश्चैताः कल्पनाः । न चैतच्चोदनालक्षणत्वे युक्तम् । कस्तर्हि प्रकारः । उच्यते । सपिण्डोद्देशेनैव हि चत्वारोऽपि कल्पाः । सापिण्डतापि हि चतुष्प्रकारैव । यथोक्तं—"पिण्डानिवृत्तिः सप्तमे पञ्चमे वे"ति । वृत्ते वर्तमाने चेति चोभयथा सूत्रार्थयोजनादेतदापद्येते—पञ्चमे षष्ठे वा सप्तमेऽष्टमे वा पुरुषे पिण्डानिवृत्तिरिति । अत एवोक्तं—

"सपिण्डता तु पुरुषे सप्तमे विनिवर्तते"

---

१. 'भि' ङ. पाठः. २. 'राद् व' ग. पाठः.

इति । सप्तमे विगतेऽष्टमे निवर्तत एव, न परतः प्रवर्तत इत्यर्थः । तदेवं चतुष्प्रकारां सपिण्डतामालोच्य यथासन्निकर्षं दशाहादिकल्पयोजना । ततश्च समानोदकानां चतुष्प्रकाराणां त्र्यहपक्षिण्येकाहसद्यःशौचादिकल्पव्यवस्थाप्युपपन्ना भवति । पिण्डनिवृत्तिकल्पनायामेव[1] तु कथं व्यवस्थेति चेद्, उक्तं "पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात् पुत्रवांश्चेदि"त्युपक्रम्य "निवर्तते चतुर्थे" इति । अतः प्रमीतपितृकस्य पञ्चमे पिण्डनिवृत्तिः, एवं जीवपितृकस्य षष्ठे, जीवपितामहस्य सप्तमे, जीवप्रपितामहस्याष्टम इति व्यवस्था । सहनिवसतां च पितृनिमित्तमेव पुत्राणामाशौचम् । पृथङ्निवासे तु प्रत्यात्मिकम् । तथा च पराशरो निवासभेदाभिप्रायेणैवाह —

"सम्पर्केषु निवृत्तानां न प्रेतं नैव सूतकम्"

इति । एवं सर्ववर्णानां सपिण्डसमानोदकत्वेनाशौचकल्पव्यवस्था योज्या । ब्राह्मणादिजन्मानुसारेण वाक्यव्यवस्था । वैश्यवच्छौचकल्पः स्यादित्येतदनुसाराच्च शूद्रस्याप्यनेककल्पप्रसङ्गे पूर्ववद् योज्यम् । न्यायवर्तिनामिति वचनाद् द्विजात्याश्रितशूद्रविषय एवायम्, इतरस्य त्वष्टपौरुष्येव सपिण्डता । मास एवास्यैकः शुद्धिप्रकारः । क्षत्रियादीनां तु ब्राह्मणादिजातविषयतया च ब्राह्मणादीनां त्रिपुरुषमेव सपिण्डता । तथाच शङ्खः — "पिण्डस्त्वावर्तते त्रिष्वि"ति । आशौचकल्पश्च प्रत्यात्मिक एव "एकपिण्डाः पृथक्शौचा" इति वचनात् । एवञ्च पितृव्यतत्पुत्रादिविषयं स्वपुत्रादिविषयतया तु सहनिवासिनां पितृतुल्यमेवाशौचम् । तथाचोक्तं —

"मृते सूते तु दासानां पुत्राणां चानुलोमिनाम् ।
स्वामितुल्यं भवेच्छौचमृते स्वामिनि यौतकम् ॥"

इति । पितुः पुनः

"वर्णानामानुलोम्येन स्त्रीणामेको यदा पतिः ।
दशाहषट्त्र्यहैकाहाः सूतके मृतके तथा ॥"

इति । अनया दिशा सर्वेषामाशौचकल्पानां विषयकल्पना । यदि त्ववश्यं वृत्ताद्यपेक्षयापि विषयकल्पना, ततो वरमश्वस्तनत्रै(य)हिकादिवृत्तिविशेषापेक्षयैव, दृष्टार्थत्वात् । यत्तु गौतमीयं "राज्ञां च कार्यविरोधादि"त्यादि

---

1. ल्पानामे' ग. पाठः.

सद्यःशौचाभिधानं तद्धेत्वभिधानात् प्रवृत्तब्रह्मयज्ञानां तन्मात्र एव द्रष्टव्यम् । अध्यापनप्रवृत्तेर्वाश्वस्तनिकादिवदेव स्वाध्याये । एवं सत्रिव्रतिप्रभृतीनामपि तन्मात्रतयैवाशौचनिवृत्तिरवगन्तव्येत्येषा दिक् । सूतकमप्येवमेवातिदेशानुसाराद् योज्यम् । अन्ये तु दशाहमात्रातिदेशं सूतकं मन्यन्ते । तत् पुनरशाब्दत्वादकिञ्चित् । यत्तु मातुरेकाहादिप्रसङ्गात् समाचारात् स्मृत्यन्तरोक्तदशरात्रसमालम्भनादिविरोधाच्च दशाहातिदेश इति, तन्मातापित्रोः सपिण्डतावधिविशेषाश्रयचतुरहाद्यप्रसङ्गात् फल्गुप्रायमेव स्यात् । अतः शावाशौचवदत्राप्यतिदेशानुसारिण्येव व्यवस्थाकल्पनेत्यनवद्यम् । यत्तु "सूतकं मातुरेव स्यादि"ति, तदङ्गस्पर्शप्रतिषेधार्थमिति व्याख्यातमेव । यत्तु

"निरस्य तु पुमाञ्छुक्रमुपस्पृश्यैव शुध्यति ।
बैजिकादभिसंबन्धादनुरुन्ध्यादघं त्र्यहम् ॥"

इति । तच्छूद्रविषयमवरुद्धदासीसंबन्धेन नियोगसंबन्धेन वा द्रष्टव्यम् । अवरुद्धदासीविषयत्वेन[1] तु निरस्य शुक्रं पुत्रजन्मादावुपस्पृश्य सद्य एव शुचिः । नियोगपक्षेण तु "बैजिकादभिसंबन्धात् त्र्यहमि"त्येषा दिक् । कन्याविषयं तु वाक्यत्रयं विषयव्यवस्थयैव पठ्यत इत्यविरोधः । तद्यथा—

"अप्रौढायां तु कन्यायां सद्यःशौचं विधीयते"

इत्येतद्वाक्यानुसारादकृतचूडाविषयं द्रष्टव्यम् । "अहस्त्वदत्तकन्यासु" इत्येतत् कृतचूडायामदत्तायाम् । दत्तायां तु मानवं, येभ्यो दत्ता तेषां त्रिरात्रमेवास्तु यैर्दत्ता तेषां चैकाहादिना[2]

"यथोक्तेनैव कल्पेन शुद्ध्यन्ति तु सनाभयः"

इति वचनात् । अन्ये तु यथोक्तेनैव कल्पेनेति दशरात्रं वर्णयन्ति । तत्तु स्वशास्त्रानुसारेण क्लिष्टकल्पनया प्रतीयमानमपि न्यायसमाचारस्मृत्यन्तरानुसारादयुक्तमेव । प्रोषितप्रेतवाक्यानि तु त्रिरात्रपक्षिण्येकाहसद्यःशौचविषयाणि सपिण्डतावधिविशेषानुसारेणैव व्याख्येयानि । मातुलादिविषयत्वेन तु,

"विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान्"

---

१. 'न नि' ग. पाठः. २. 'ते चै' क. पाठः.

इति वचनान्निर्हरणकर्तुरेव त्रिरात्रम्, अन्यस्य तु पक्षिण्येव । एकाहस्तु सापत्नादिविषय एव । सपिण्डसमानोदकव्यतिरेकेण च सर्वत्र क्षपणमात्रमनुज्ज्वलवेषतालक्षणमाशौचसादृश्यादाशौचवचनं द्रष्टव्यं, न तु यज्ञाद्यधिकारनिवृत्तिः ।

"सब्रह्मचारिण्येकाहमतीते क्षपणं स्मृतम्"

इति प्रक्रमात् समाचाराच्च । एवं सर्वथा सर्ववाक्यानां व्यवस्थासिद्धिरित्यलं प्रसङ्गेन ॥ ३० ॥

एवं तावद् विस्पष्ट[1]विज्ञानानिमित्तकं सर्वत्र सर्वथा चाशौचविधिमुक्त्वा स्वभावोपहतस्येदानीं निसर्गजाविद्योपप्लवादात्मन इन्द्रियाणां शरीरस्य तदुपकरणस्य वा सम्यक् संशुद्धिकारणं सामान्येनैवाह—

**कालोऽग्निः कर्म मृद् वायुर्मनो ज्ञानं तपो जलम् ।**
**पश्चात्तापो निराहारः सर्वेऽमी शुद्धिहेतवः ॥ ३१ ॥**

अग्निरिति तेजस उदाहरणं, मृत् पृथिव्याः । जलवाय्वोस्तु स्वरूपेणैवोपादानम् । एतानि पृथिव्यादीनि चत्वारि महाभूतानि एतदात्मकस्य बाह्यस्योपकरणस्य व्यस्तसमस्तात्मना यथायोगं शुद्धिसाधनानि[2], कालकर्मणोस्तु बाह्यस्याभ्यन्तरस्य चात्मन[3] इन्द्रियग्रामस्य च, मन इन्द्रियान्तराणां, मनसस्तु वक्ष्यति, अवशिष्टानि ज्ञानादीन्यात्मनः । एवं यथायोगमविशेषेण वा सर्वत्र सर्वेऽमी शुद्धिहेतव इत्यवसेयम् । सर्वेषां स्वदेशदेशान्तराभिहितस्वविषयशुद्धिसाधनानां संक्षेपेण पुनर्वचनार्थतया वायमुपसंहारार्थोऽनुवादः ॥ ३१ ॥

एतदेव स्पष्टयितुं विषयव्यवस्थया प्रपञ्चयति —

**अकार्यकारिणां दानं वेगो नद्यास्तु शुद्धिकृत् ।**
**शोध्यस्य मृच्च तोयं च संन्यासो वै द्विजन्मनाम् ॥ ३२ ॥**
**तपो वेदविदां क्षान्तिर्विदुषां वर्ष्मणो जलम् ।**

वर्ष्म शरीरम् । तथाच स्वायंभुवं —"मृद्भिरद्भिश्च गात्राणि" इति ॥ ३२३ ॥

---

१. 'ष्टनिमित्त स', २. 'नं का', ३. 'वा' क. पाठः.

किंच—

**जपः प्रच्छन्नपापानां मनसः सत्यमुच्यते ॥ ३३ ॥**
**भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनम् ।**
**क्षेत्रज्ञस्येश्वरज्ञानाद् विशुद्धिः परमा मता ॥ ३४ ॥**

त्रयः श्लोकाः स्पष्टार्था वक्ष्यमाणोपनिषत्काण्डप्रायश्चित्तकाण्डयोः सूत्रभूता द्रष्टव्याः ॥ ३३, ३४ ॥

इत्याशौचप्रकरणम् ।

---

अथापद्धर्मप्रकरणम् ।

अकार्यकारिणां दानाच्छुद्धिरित्यस्य विवेकार्थमाह—

**क्षात्रेण कर्मणा जीवेद् विशां वाप्यापदि द्विजः ।**
**निस्तीर्यार्थं तमुत्सृज्य पाव्यात्मानं न्यसेत् पथि ॥ ३५ ॥**

क्षात्रेण प्रजापालनादिकर्मणा ब्राह्मणवैश्ययोः वैश्यकर्मणा वा पूर्वयोः, अकार्यभूतेनापि स्ववृत्त्यसंभवलक्षणायामापदि जीवनं धर्म्यमेव । द्विजवचनाच्च क्षत्रियवैश्यधर्मान्त्राचयत्वेन वर्णत्रयसाधारण्यं व्याख्यातम् । तथाच नारदः—

"उत्कृष्टं चापकृष्टं च तयोः कर्म न विद्यते ।
मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते ॥"

इति । अकार्यत्वाच्चापत्कल्पत्वम् । तेन तामापदं निस्तीर्य उत्सृज्य चावशिष्टं द्रव्यं दानेन विधिवत् पावयित्वा आत्मानं स्ववृत्तिलक्षण एव पथि स्थापयेद् न तस्यामेव क्षत्रियादिवृत्तौ रतिं कुर्यादित्यभिप्रायः ॥ ३५ ॥

आपद्गतोऽपि च—

**फलोपलक्षौमसोममनुष्यापूपवीरुधः ।**
**तिलौदनरसक्षारान् दधि क्षीरं घृतं जलम् ॥ ३६ ॥**

---

१ 'क' क. पाठः.

**शस्त्रासवं मधूच्छिष्टं मधु लाक्षाथ बर्हिषः ।**
**मृच्चर्मपुष्पकुतपकेशतक्रविषैरकान् ॥ ३७ ॥**
**कौशेयनीलीलवणमांसैकशफहेतवः ।**
**शाकार्द्रौषधिपिण्याकतूलगन्धांस्तथैव च ॥ ३८ ॥**
**वैश्यवृत्त्यापि सञ्जीवन् विक्रीणीत न कर्हिचित् ।**
**धर्मार्थं विक्रयं नेयास्तिला धान्येन तत्समाः ॥ ३९ ॥**

वैश्यवृत्त्यापि हि ब्राह्मणक्षत्रिययोरापदि जीवतोः फलादीनि श्लोकत्रयपठितान्यविक्रेयाणि । तत्प्रतिषेधाद् वैश्यस्यैतान्यनिषिद्धानीति गम्यते । फलान्याम्रादीनि । उपलाः पाषाणशिलादयः पद्मरागादयश्च । क्षौममतसीमयं गोण्यादि । सोमादीनि प्रसिद्धानि । वीरुध आरण्या ओषधयः । अपूपा मण्डकाः । तिलादीनि स्पष्टानि । जलमाधारस्थमुद्धृतं वा । मूल्येन तु यदुदकाहरणं सस्यप्रसेचनाय वप्रमापाद्यार्पणं तदुदकविक्रयत्वेन क्रियान्तरार्थत्वान्नाशङ्कनीयम् । शस्त्राणि खड्गादीनि । आसवः खर्जूरादिरसः । रसत्वेन च निषिद्धस्य पुनर्वचनं शब्दान्तराभिधेयत्वात् प्रायश्चित्तविशेषार्थमेवेत्येतदेवं च युक्ततरम् अर्थानुसारित्वात् प्रतिषेधस्य । मधु मद्यम् । उच्छिष्टं प्रसिद्धम् । मधु माक्षिकं मादनं वा मधूच्छिष्टमुच्यते । अथशब्दोऽभिधेयान्यत्वप्रतिपत्त्यर्थः । बर्हिष इति तु षष्ठ्यन्तनिर्देशो व्यत्ययप्रतिपत्त्यर्थः । ततश्च तृणमात्रवचनोऽपि बर्हिःशब्दः संस्कृतत्वानुसारेणाशेषस्रुगादियज्ञसाधनप्रतिषेधार्थः । मृदादीनि प्रसिद्धानि । जलव्याख्यानवच्च योजना । अर्थान्तरत्वाच्च भूमेर्न दोषः । प्रकृतिविकारयोश्चात्र यावदुक्तोपादानमेव, क्षीरतक्रयोः पृथग्वचनात् । विषरका विषमुदकं तत्रभवा मत्स्यादयः । कौशेयं त्रसरीमयम् । नीली गुलिका वस्त्राद्यनुप्रविष्टा केवला वा । लवणमांसादीनि प्रसिद्धानि । एकशफा एकखुरा अश्वादयः । हेतवो वध-

---

१. 'च्च' ख. पाठः. २. 'र्थं वे', ३. 'व यु', ४. 'ति ष', ५. 'नो व', ६. 'त्वाच्चात्र' क. ख. पाठः.

साधनानि विषादीनि । शाकानामन्यत्र विक्रयोपदेशादिह नालिकादन्यिभक्ष्याणि प्रत्येतव्यानि । आर्द्रौषधयस्त्वलूनाः क्षितिस्थाः, परशस्त्राद्युपहतास्तु न प्रतिषिध्यन्ते । पिण्याकः खलिः । तूलं शल्मल्यादिप्रभवम् । गन्धाः कर्पूरादयः । तथाशब्दः स्मृत्यन्तरोक्तशाणाद्यर्थः । तिलास्त्ववैश्यवृत्तिस्थेनापि धर्मार्थे स्वकृष्याद्युत्पन्ना विक्रेयाः, धान्यान्तरपरिवर्तनेन वा वैश्यस्यापि च । अन्यथा तिलविक्रये प्रत्यवायः । तथाचोक्तं —

"भोजनाभ्यञ्जनाद् दानाद् योऽन्यत्र कुरुते तिलैः ।
कृमीभूतः स विष्ठायां पितृभिः सह मज्जति ॥"

इति । कामं वा स्वयं कृष्योत्पाद्यं तिलान् विक्रीणीयादिति वैश्यस्यं ॥ ३६—३९ ॥

अपिच —

**लवणं तनया लाक्षा पतनीयानि विक्रये ।**
**पयो दधि च मद्यं च हीनवर्णकराणि तु ॥ ४० ॥**

कथं तर्हि शुनःशेफादिविक्रयः श्रुतेः प्रतिषिद्धत्वादेव पित्रादिनिन्दाद्वारेण शुनःशेफस्य प्रशंसार्थं, (?) यद्वा सर्वथाप्यापदि स्वप्राणपरिरक्षणार्थमित्यर्थः ॥ ४० ॥

तदेव स्पष्टयति —

**आपद्गतः संप्रगृह्णन् भुञ्जानो वा यतस्ततः ।**
**न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः ॥ ४१ ॥**

यथैव ज्वलनश्चण्डालादिगृहेष्वपि वर्तमानोऽर्को वा सर्वत्र साम्येन वर्तमानो निर्दोषः, एवं ब्राह्मणोऽपि जपादिभिरापद्गतः प्रातिलभ्य शरीरमार्जितदुरितक्षपणसमर्थ इत्यादित्यवदेव यदृच्छाप्रचारित्वभाविरुद्धम् ॥ ४१ ॥

यतश्चैतदेवमतः —

**कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः ।**
**सेवानूपो नृपो भैक्षमापत्तौ जीवनानि तु ॥ ४२ ॥**

---

१. 'स्वकृ' क. ख. पाठः. २. 'स्यापि ॥ ल', ३. 'ण वा · शु', ४. 'मान्येनापि व' ग. पाठः. ५. 'दिव' ख. पाठः.

कृष्यादीनि यथासम्भवमापदो निस्तरणहेतुत्वेनैकादश जीवनानि । एतानि चोदाहरणार्थत्वेन, सर्वथा तु न तदस्ति यदापद्यकर्तव्यमित्यभिप्रायः । कृषिः प्रसिद्धा । शिल्पं चित्रकर्मादि । भृतिर्मासादिवृत्त्या परकीयकर्मकरणम् । विद्या मूल्येनाध्यापनम् । कुसीदं प्रायोग्यम् । शकटं मूल्येन शकटवाहनम् । गिरिः पर्वतः तदीयतृणकाष्ठादिविक्रयैः तदुपजीवनम् । सेवा प्रसिद्धा । अनूपो नद्यादिकच्छः तदुत्पन्नशाकादिविक्रयैः तदुपजीवनम् । नृपो राजा तत्प्रतिग्रहानुजीवनम् । भैक्षं कृताकृतान्नादिभेदेन द्विप्रकारम् ॥ ४२ ॥

दुस्तरत्वादेव चापदां —

**बुभुक्षितस्त्र्यहं स्थित्वा धनमब्राह्मणाद्धरेत् ।**
**प्रतिगृह्य तदाख्येयमभियुक्तेन धर्मतः ॥ ४३ ॥**

स्वरूपपरिमाणाद्यविप्रतिपत्त्येत्यर्थः ॥ ४३ ॥

एवञ्च राजाभियुक्तस्याविप्रतिपन्नत्वेन —

**तस्य वृत्तं कुलं शीलं श्रुतमध्ययनं सुतान् ।**
**ज्ञात्वा राजा कुटुम्बात् स्वाद्द धर्म्यां वृत्तिं प्रकल्पयेत् ॥**

तस्य वृत्तादीनि व्यस्तसमस्ततया निरूप्य गुणानुसारेणैव राजा स्वात् स्वकीयाद् धनभाण्डागारादप्यन्यानि परिभाव्य कार्यान्तराणि धर्म्यां वृत्तिं धर्माविरोधिनीं यथा वृत्तानुसारेण दृष्टादृष्टार्थात् स्वकर्मणो न हीयते तथाभूतां शाश्वतीं वृत्तिं प्रकल्पयेदिति ॥ ४४ ॥

इत्यापद्धर्मप्रकरणम् ।

---

### अथ वानप्रस्थधर्मप्रकरणम् ।

एवं तावदाश्रमद्वयमभिहितम् । इदानीं गृहस्थाश्रममुपभुज्य वलीपलितवतो विद्यमानसन्तानस्य विषयविरक्तस्य च क्रमप्राप्तस्तृतीयो वानप्रस्थाश्रम उच्यते । पूर्वं तु वेदानुवचनात्मकाद् ब्रह्मचर्यादनन्तरं 'यमिच्छेत् तमावसेदि'त्येवं न्यायागमानुसारेण व्युत्थानपक्षोऽभिहितः । तत्र

१. 'णत्वे' ग. पाठः २. 'यः । से', ३. 'यस्तेनोप', ४. 'हाप्य का' ख. पाठः,

समुच्चयपक्षस्त्विदानीमुच्यते । ननुच युक्तं यद्वैराग्यातिशयाद् दाराहरणाद्यनपेक्षस्य व्युत्थायाश्रमान्तराङ्गीकरणम् । कृतदारस्य तु कामाकृष्टचेतसो यावज्जीवश्रुत्यवरुद्धस्य तद्विरोधितया चाप्रमाणीभूतस्मृत्यर्थानुसारिणी दुःश्लिष्टैवाश्रमान्तरप्रतिपत्तिः । अथ पुनर्वैराग्ययोगादेवेत्युच्यते । तदसत् । प्रतिपत्तिकाल एव हि शास्त्रार्थो निरूप्यते, न त्वनुष्ठीयमानप्रयोगमध्येऽपि । ननुच यथैव कामिनोऽधिकृतस्यापवृत्तकामस्य प्रयोगमध्येऽप्यनधिकाराद् व्युत्थानम् । एवमत्रापि स्यात् । अपिच जीवतोऽपि प्रयोगपर्यन्त एवाधिकारः । तत्र पौर्णमास्यन्तरे पूर्वप्रारब्धप्रयोगपर्यवसानात् प्रयोगान्तरे च वैराग्यातिशयादधिकारानवगतेः । मैवम् । युक्तं हि कामिनः फलं प्रति साधनभूत एव धात्वर्थेऽधिकारावगमाद् वीतायां च फलेच्छायां तद्व्यावृत्तेः जीवतः पुनर्न विध्यर्थादन्यत्र यागादेः साधनत्वं, न च नियोज्यत्वव्यावृत्तिः जीवनानपायात्, प्रयुक्तदारत्वाच्च न तद्गतोऽपि विशेषः पूर्ववदत्र कश्चिच्छक्यते वक्तुम् । प्रयोगभेदाभेदौ त्वधिकारहेत्वनपायादकिञ्चित्करावेव । अत्र श्रुतिविरोधात् क्रमेणायुक्त एव वनस्थाश्रमः । अत एव च गौतमेन "ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद् गार्हस्थ्यस्ये"-त्युक्तम्[1] । तत्रान्ये पुरुषमेधान्ते वनस्थाद्याश्रममाहुः, प्रत्यक्षचोदनानुसारात् । तथाहि— "अथात्मन्यग्नीन् समारोप्ये"ति प्रकृत्य "अनवेक्षमाणोऽरण्यं गच्छेदि" त्यादि । तदप्यविशेषेणैव वनस्थादिस्मृत्यारम्भादनुपयोगिप्रायमेव । जरामर्यवचनं तु लिङ्गाद्, न्यायान्तरापेक्षवचनविध्यनुमानं प्रत्यक्षविधिविरोधात् । अतो वक्तव्यमेतत् । अत्राभिधीयते—कामादिभिः प्रयुक्तदाराणां यावज्जीवश्रुतिरित्येतत् प्रागप्युक्तमेव । अपगतकामत्वे च तदप्रयुक्ता नैवाग्निहोत्रादिभिर्दाराः प्रयोक्तुं शक्याः । तदभावाच्च कृतदारेषु चरितार्थतया यावज्जीवश्रुत्यनधिकृतानां किमित्याश्रमान्तरं न स्यात् । ननुचोत्पत्तिं विधयो न प्रयुञ्जते । उत्पन्नस्य तु दारादेः स्वोत्पत्तिहेत्वपायेऽपि स्वरूपानपायात् तदपेक्षत्वेऽप्यधिकारचोदनानामविरोध एव । न हि कामापाये दाराणामतथात्वम्, अन्यथानेकपत्नीकस्यैकपत्नीविषयकामापगमादपत्नीकत्वप्रसङ्गात् स्मृतिविरोधोऽपि स्यात् । नैव वयमुत्पत्तिनिमित्तत्वेन कामापायादपत्नी(क)त्वं ब्रूमः । किं तर्हि । स्वीकृतं हि स्त्री द्रव्यम् ।

---

1. 'हि श्रूयते—अ' क. च. पाठः.

स्वीकरणहेतुर्विवाहसंस्कारः। स्वीकरणं च द्रव्याणां यावत्कार्यं यावत्स्वरूपं वा स्वीकर्त्रभिप्रायानुसारेण। तत्र यद्यत्यन्तकामाकृष्टचेतनस्तदादावेव यावज्जीवचोदनामालोच्य स्वरूपाश्रयत्वेनैवात्यन्तायोद्वाहकर्मणा स्वीकुर्यात्, ईषत्कामाकृष्टचेतनस्तु यावदर्थम्, आ वलीपलितसम्भवात् सन्तानार्थतया वा पुत्रोत्पत्तेरेव स्वीकरणद्वारत्वादुक्तावध्यन्ततैव। दाराभावाच्चाकृतदारस्येव यावज्जीवश्रुतिरनियोक्त्रेव। अतस्तद्विरोधोऽप्यनाशङ्कनीयः। स्वीकरणावधिव्यवस्थायां तु जीवनश्रुतेः कृतदाराधिकारत्वादेवौदासीन्यमित्यविरुद्धा क्रमेणापि चतुःसमुच्चयस्मृतिः। एवञ्च जरामर्यवचनमप्यपेक्षितावधिसमर्पकत्वात् स्मृतिमूलत्वेन सालम्बनं भवति, अन्यथा तु निरालम्बनत्वादनर्थकमेव स्यात्। गौतमीयमपि यावज्जीवपक्षाङ्गीकरणेनैव "ऐकाश्रम्यं त्वाचार्या" इति व्याख्येयम्। प्रत्यक्षेणैव कामेनात्मसात्कृतदारान् प्रति तथैव विधानाद् गार्हस्थ्यस्येत्यभिप्रायः। एवञ्चावधिपर्यवसानाद् दाराभाव एव। अतश्चास्मिन् पक्षे पुत्रादिषु तत्पालकत्वेनाधिकृतेषु स्वभार्याङ्गीकरणप्रवर्तिकेति विषयभेदेन विकल्पसम्भवाद् अविशेषेणैव हि यावज्जीवश्रुतिः। पुरुषमेधयाजिनश्चेच्छयारण्यगमनोपदेशादुभयोश्च प्रत्यक्षत्वाद् विषयव्यवस्थाश्रयणमविरुद्धम्। सपत्नीकस्य तु वैखानसत्वं यायावरादिकल्पवच्छ्रुत्यविरुद्धमेव। अतश्चास्मिन् पक्षे साग्निकस्यैवारण्याश्रयणं, न श्रामणकानुसारेणाग्न्याधानम्। यावज्जीवपक्षाङ्गीकरणे तु जरादिसंयोगाद् भार्यामरणे वापवृत्तकामस्य च तदसम्भवे किं वनस्थाधिकारोऽस्तीति, उत्सन्नाभिलाषस्य तावद् दाराद्याहरणहेत्वभावादस्त्येव, इतरस्य तु विचार्यम्। अपर आह — उद्वाहकाल एव हि येनैव निरूपितं मयाश्रमान्तरेमप्यास्थेयमिति तस्य तदवधिक एवं हि दारसंयोग इति तदनुसारी च जीवनाधिकारोऽपि तदैवापमृज्यते। येन त्वादावेवामरणान्तः पत्नीसंयोगोऽवधृतः, तदनुसारेण चामरणादेवाग्निहोत्राद्यधिकारः। तस्योत्सन्नाभिलाषित्वेऽपि च सङ्कल्पानपगमाज्जीवनश्रुत्यवरुद्धस्य कुतस्तदाश्रयान्तरप्रतिपत्तिरिति। तथाच स्मरन्ति —

"पुनर्दारक्रियां कुर्यात् पुनराधानमेव च"

---

१. 'रास्थं', २. 'व दा', ३. 'ज्येत, ये', ४. 'रा' क. पाठः. ५. 'सम्बन्ध इति' ग. पाठः.

इति । तदेतद् विचार्यम् । सर्वथाश्रमसमुच्चयोऽस्तीति नः पक्षः, स चैवमप्युपपन्नः, पूर्वोक्त एव तु ज्यायान् इति सम्प्रदायः । पुनर्दारक्रियामित्येतत्त्वप्रवृत्ताश्रमान्तरविषयमेवेत्येषा दिक् ।

[1]उभयथापि च वनस्थाश्रमप्रवृत्तिमव्याहतां मन्यमानः प्रस्तौति —

**सुतविन्यस्तपत्नीकस्तया वानुगतो वने ।**
**वानप्रस्थो ब्रह्मचारी साग्निः सौपासनः क्षमी ॥ ४५ ॥**

स्यादिति शेषः । तपो वेदविदां शुद्धिसाधनं क्षान्तिर्विदुषामिति तदिदानीं प्रपञ्चयति । वानप्रस्थ इति विशेषाश्रमिणो नामधेयम् । स कदाचित् पूर्वोक्तन्यायानुसारेण सहैव पत्न्या वनं गच्छेद्, विन्यस्य वा सुतादिषु पत्नीम् । यदा च सपत्नीकस्तदा तयानुगतोऽपि वने वसन् ब्रह्मचार्येव स्यादित्यभिप्रायः । पक्षान्तरे तु सामर्थ्यप्राप्तत्वादवाच्यमेवैतत् । साग्निरिति वैतानिकाभिप्रायम् । सौपासन आवसथ्ययुक्तः । गतार्थमन्यत् ॥ ४५ ॥

अयं [2]चास्य विशेषः —

**अफालकृष्टेनाग्नींश्च पितॄन् देवातिथींस्तथा ।**
**भृत्यांश्च तर्पयेच्छ्मश्रुजटालोमभृदात्मवान् ॥ ४६ ॥**

साग्निकगमनपक्षेऽग्निहोत्रादिसाधनत्वेनाफालकृष्टविधानम् । पक्षान्तरे तु वैखानसशास्त्रोक्तस्यैवमादेः प्रदर्शनार्थ उपन्यासः । तथाशब्दश्च पक्षद्वयेऽपि तच्छास्त्रानुसारेण दीक्षादिविशेषप्रकारपरिग्रहार्थः । स्पष्टमन्यत् ॥ ४६ ॥

अतिथिपूजाद्यर्थमेव च —

**अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा ।**
**अर्थस्य निचयं कुर्यात् कृतमाश्वयुजे त्यजेत् ॥ ४७ ॥**

तथाशब्दः संवत्सरादर्वागनियमार्थम् ॥ ४७ ॥

---

१. 'च्यविरुद्धः, पू' ग. पाठः. २. 'त्र', ३. 'त्रप्राप्तस्यै', ४. 'क्षावि' क. पाठः.

किञ्च —

**दान्तस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात् ।**

अप्रत्याख्येयतया विहितादपीत्यभिप्रायः ॥

सर्वदैव च —

**स्वाध्यायवान् दानशीलः सर्वसत्त्वहिते रतः ॥ ४८ ॥**

आत्मभरणाय तु —

**दन्तोलूखलिकः कालपक्काशी वाश्मकुट्टकः ।**
**श्रौतस्मार्तं फलस्नेहैः कर्म कुर्यात् क्रियास्तथा ॥ ४९ ॥**

दन्तैरेवोलूखलार्थं[1] संपादयिता दन्तोलूखलिकः । सतुषान्नभोजन इत्यर्थः । अश्मकुट्टको वा स्याद् अश्मना संस्कृत्य वितुषं भक्षयितेत्यर्थः । शक्त्यपेक्षया चैवमादयः सर्व एव विकल्पा योज्याः । कालपक्काशितावचनम् अनग्निपक्कार्थम् । नित्यत्वेनैवाप्रतिषिद्धाक्षादिफलस्नेहैस्त्वाज्यसाध्यं श्रौतस्मार्तादिकं कर्म कुर्यात् । क्रियाश्च वनस्थशास्त्रविहिताः । तथा तदुक्तप्रकारेणैवेत्यर्थः ॥ ४९ ॥

स्वशक्त्यनुसारेणैव च —

**चान्द्रायणैर्नयेत् कालं कृच्छ्रैर्वा वर्तयेत् सदा ।**
**पक्षे गते वाप्यश्नीयात् मासे वाहनि वा गते ॥ ५० ॥**

पुनर्गते इति वचनमुक्तकाल[3]व्यतिरेकेणापि यथासामर्थ्यं विकल्पार्थम् । स्पष्टमन्यत् ॥ ५० ॥

निर्त्यं चाप्रमादित्वेन —

**शुचिर्भूमौ स्वपेद्रात्रौ दिवसं प्रपदैर्नयेत् ।**
**स्थानासनविहारैर्वा योगाभ्यासेन वा पुनः ॥ ५१ ॥**

---

१. 'र्थं', २. 'तव', ३. 'क्राति' ख. पाठः.

रात्राविति दिवानिवृत्त्यर्थम् । प्रपदैरिति अग्रोच्छ्रितपाद इत्यर्थः । स्थानादीनि स्पष्टानि । योगाभ्यासो वक्ष्यमाणः । पुनरिति प्रपदादिभिः । पुनः पुनर्विश्रम्येत्यर्थः ॥ ५१ ॥

यथासामर्थ्यं च—

**ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः ।**
**आर्द्रवासाश्च हेमन्ते शक्त्या वापि तपश्चरेत् ॥ ५२ ॥**

स्थण्डिलवचनमावरणनिवृत्त्यर्थम् । ऋज्वन्यत् ॥ ५२ ॥

सर्वप्रकारस्य वनस्थस्यायमेवाश्रमसर्वस्वभूतः परमो धर्मः—

**यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति ।**
**अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च ॥ ५३ ॥**

वितुदति विविधं कण्टकादिभिर्व्यथयतीत्यर्थः । एवमुक्तप्रकारेणैव वनस्थाश्रमं पालयेत् ॥ ५३ ॥

**अग्नीन् वाप्यात्मसात् कृत्वा वृक्षावासी मिताशनः ।**
**वानप्रस्थगृहेष्वेव यात्रार्थं भैक्षमाचरेत् ॥ ५४ ॥**

सपत्नीकस्य च पत्नीमरणे पत्न्या एवात्मार्धभूताया अग्निभिर्यो दाहः तदेवात्मसमारोपणम् अन्यस्य तु प्रवृत्ताश्रमस्याशक्तौ वा वैराग्यातिशये वायं विधिः । अनेनैव वादित एव प्रवृत्तिरित्यवसेयम् ॥ ५४ ॥

वानप्रस्थान्तराभावे तु —

**ग्रामादाहृत्य वा ग्रासानष्टौ भुञ्जीत वाग्यतः ।**

आहृत्येति भिक्षाकालव्यतिरेकेण ग्रामप्रवेशनिवृत्त्यर्थम् । वाग्यत इति ग्रामजनैरसंभाषणार्थम् । भोजने तु वाग्यमनस्य प्राप्तत्वादवाच्यम् ॥

वैराग्यातिशये ज्ञानातिशये वा —

**वाय्वशनः प्रागुदीचीं गच्छेद्वा वर्ष्मसंक्षयात् ॥ ५५ ॥**

---

१. 'दयो व', २. 'णाः' ग. पाठः. ३. 'मा' ख. पाठः. ४. 'म्य विश्रम्येत्य', ५. 'रं वन', ६. 'वार्धं' ग. पाठः.

वाय्वशनो निरशन इत्यर्थः । आ वर्ष्मसंक्षयादिति । वर्ष्म शरीरम् आ शरीरसंक्षयादित्यर्थः । आश्रमसंबन्धिफलविशेषानुपदेशाद् दुष्करत्वाच्चायमाश्रमो नैयमिक इत्यवगम्यते । योगाभ्यासोपदेशाच्चापवर्गसाधनत्वात् कैवल्यप्राप्तिसाधनम् । तथाचाम्नायः — "सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति" इति ॥ ५५ ॥

इति वानप्रस्थधर्मप्रकरणम् ।

---

अथ यतिधर्मप्रकरणम् ।

एवं यथोक्तविध्यर्थानुष्ठानात् प्रतिषिद्धार्थोपेक्षणाच्चोत्पन्नवैराग्यतया सञ्जातसम्यग्विज्ञानः परं ब्रह्मापिपायिषुः निरस्ताखिलसांसारिकसुखास्वादाभिलाषः स्वरूपविवेकाभिषेककृत्वेन —

**गृहाद् वनाद् वा कृत्वेष्टिं सर्ववेदसदक्षिणाम् ।**
**प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि ॥ ५६ ॥**

**अधीतवेदो जपकृत् पुत्रवानन्नदोऽग्निमान् ।**
**शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा ॥ ५७ ॥**

प्राजापत्येष्टिस्वरूपं समारोपणप्रकारश्च संन्यासविधानशास्त्रादेवावसेयम् । मोक्षे मनः कुर्यात् चतुर्थमाश्रममाश्रयेदित्यर्थः । तुशब्दोऽधीतवेदादिक्रमेणैवेत्यवधारणार्थः । नान्यथेति तु सामर्थ्यप्राप्तत्वात् प्रशंसार्थो नित्यानुवादः । तथाच स्वायंभुवम् —

"अनधीत्य द्विजो वेदाननुत्पाद्य तथात्मजान् ।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥"

इति । नन्वनधीतवेदस्य कामं मा भूत् पारिव्राज्यं, पुत्राद्यभावे तु को विरोधः । उक्तमेतद् — 'रागिणामेव गार्हस्थ्यमि'ति । तद्यदि कृतदारोऽपि पुत्राद्युत्पत्तावप्रयत्यैव पारिव्राज्यमाश्रयेत् ततश्चोदनार्थातिक्रमान्मोक्षमिच्छन् व्रजत्यध इति युक्तमेव । वीतरागविषयतया तु "यमिच्छेत् तमावसेदि"त्युक्तमेव । स्पष्टमन्यत् ॥ ५६,५७ ॥

---

१. 'नोऽनश्नित्य', २. 'ति । शरीरसं' ग. पाठः. ३. 'कारणम्
४. 'दव' क. पाठः. ५. 'तश्च चोद' ग. पाठः.

**सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।**
**एकारामः परिव्रज्य भैक्षार्थं ग्राममाश्रयेत् ॥ ५८ ॥**

सर्वेभ्योऽपकारिभ्योऽपि भूतेभ्योऽनभिद्रोहेण हितः सर्वभूतहितः । यद्वा आत्माभेददर्शनेन सर्वभूतः सर्वात्मभावाच्चानभिद्रोग्धा भवत्येव । हितः शान्त इति विशेषणविशेष्यत्वं, भवत्यशान्तो व्यभिचारादिना हितः सांख्यादियोगानुसारेणाहितोऽपि शान्तः तद्व्यवच्छेदार्थं हितः शान्त इति । यद्वा हितो हिंसानारम्भकः शान्तोऽनुग्रहानारम्भकः । तथाच गौतमः— "हिंसानुग्रहयोरनारम्भी"ति । त्रिदण्डी मनोवाक्कायदण्डाभिप्रायेण "वाग्दण्डोऽथ मनोदण्ड" इत्यादि । त्रिदण्डसंयोगेनैव कमण्डल्वादेसंबन्ध इति गम्यते । एक एवारमते यस्त्वात्मरतित्वेन, स एकारामः । एवं ग्रामादुंच्छिन्नाभिलाषः परिव्रज्यारण्यनित्यो भूत्वा भिक्षार्थमेव ग्राममाश्रयेद् नान्यदा ग्रामे मुहूर्तमपि तिष्ठेदित्यभिप्रायः ॥ ५८ ॥

भैक्षार्थमपि च ग्रामं प्रविश्य समाहितमनाः—

**अप्रमत्तश्चरेद् भैक्षं सायाह्नेऽनुपलक्षितः ।**
**रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः ॥ ५९ ॥**

स्त्र्यादिसन्दर्शनादत्यन्तजितेन्द्रियत्वेऽपि प्रमादो मा भूदित्यप्रमत्तश्चरेत् । भैक्षं भिक्षाणां समूहो भैक्षम् । ततश्चैकान्ननिवृत्तिः । सायाह्नोऽपराह्णः, तस्मिन् । अनुपलक्षितः भिक्षालाभनिमित्तेन पाण्डित्यादिनात्मानमप्रख्यापयन्नित्यर्थः । अपराह्णेऽपि च यदा सर्वभिक्षुकैर्ग्रामो रहितस्तदा । यात्रामात्रं शरीरधारणमात्रार्थम् । अलोलुपः अलम्पटः । यद्वा द्विविधपरिव्राजकाभिप्रायं भिक्षाटनद्वैविध्यमत्रोच्यते । तत्राप्रमत्तश्चरेदित्यनेनैकान्नप्रतिषेधेन त्रिदण्डाद्युपलक्षितस्य भैक्षोपदेशः । इतरेण त्रिदण्डाद्यनुपलक्षितस्य ज्ञानभिक्षोर्यात्रामात्रमेकान्नोपदेशः । तेनैव च रहिते सोपलक्षणभिक्षुकैर्ग्राम इति कालान्तरोपदेशः । तथाच गौतमः "भिक्षार्थी ग्राममियाज्जघन्यमनिवृत्तं चरेदि"त्येकान्नाभिप्रायेणैवाह । अन्यथा तु भैक्षार्थीत्येवावक्ष्यत् ।

१. 'ति तु वि' क. पाठः. २. 'ति त्रि' ग. पाठः. ३. 'छुर्स', ४. 'च्चु' क. पाठः. ५. 'त्वा भिक्षाप्रयोजनं भि' ग. पाठः. ६. 'पारिव्राज्याभि', ७. 'षेण भि', क. पाठः.

जघन्यमिति च भिक्षुकान्तरापेक्षयैव कालवचनम् । यत्तु संवर्तोक्तम् —

"अष्टौ भिक्षाः समादाय प्रक्षाल्याश्नीत वाग्यतः"

इति, तत्सोपलक्षणविषयम् । इतरस्य त्वेकभिक्षणमेव । तथाच श्रुतिः — "अथान्यः परिव्राडेकशाटीपरिहितो मुण्ड उदरपात्र्यरण्यनित्यो भिक्षार्थी" इति । अनेनैतदेव स्पष्टीकरोति ॥ ५९ ॥

यथायोगं व्यवस्थया तु —

**यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च ।**
**सलिलं शुद्धिरेतेषां गोवालैश्चावघर्षणम् ॥ ६० ॥**

मृन्मयादीनि यतिपात्राणि भिक्षार्थं भोजनार्थं च । चशब्दः पत्रपुटाद्यर्थः । स्पष्टमन्यत् ॥ ६० ॥

एवञ्च नित्यमुत्पन्नवैराग्यः पूर्वोक्तक्रमेण वा पारिव्राज्यमास्थाय ततः—

**सन्निरुध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च ।**
**भयं हित्वा च भूतानाममृती भवति द्विजः ॥ ६१ ॥**

परब्रह्मप्राप्तिरमृतीभावः । द्विजग्रहणं ब्राह्मणार्थं, तेषामेव संन्यासोपदेशात् । ऋज्वन्यत् ॥ ६१ ॥

किञ्च —

**कर्तव्याशयशुद्धिस्तु भिक्षुकेण विशेषतः ।**
**ज्ञानोत्पत्तिनिमित्तत्वात् स्वातन्त्र्यकरणाय च ॥ ६२ ॥**

आशयः शरीरं तच्छुद्धिः पवनजयादिना कर्तव्या ज्ञानभिक्षुणापि, विशेषतस्त्वितरेण भिक्षुकेण । सोपलक्षणपरिव्राजकेनेति यावत् । ज्ञानोत्पत्तिनिमित्तत्वाद् विशुद्धाशयस्यैव हि ज्ञानोत्पत्तिरित्यभिप्रायः । स्वातन्त्र्यकरणाय च परकायप्रवेशादिसिद्ध्यर्थम् ॥ ६२ ॥

---

१. 'खिलाश्नतः' ग. पाठः. २. 'स्त्व', ३. 'स्वः क' क. पाठः.

अथ कर्माशयशुद्ध्यादिना स्वातन्त्र्यकरणमेवात्र परमार्थः । नेत्युच्यते । स्वातन्त्र्यस्याहिरण्यगर्भलोककर्मात्रजयहेतोः[1] क्षयिष्णुतया च संसारहेतुत्वाद् दुःखरूपतैव । अतो निरतिशयानन्दावाप्त्यर्थी[2] स्वातन्त्र्यकरणमात्रपरितोषिणा न भवितव्यम् । किं तर्हि —

**अवेक्ष्यो गर्भवासश्च कर्मजा गतयस्तथा ।**
**आधयो व्याधयश्चैव जरा रूपविपर्ययः ॥ ६३ ॥**
**भवो जातिसहस्रेषु प्रियाप्रियविपर्ययः ।**
**ध्यानयोगेन सन्दृश्यः सूक्ष्म आत्मात्मनि स्थितः ॥**

गर्भवासादयो ह्याहिरण्यगर्भव्यापिनः क्लेशाः, तांश्चावेक्ष्य तत्स्वरूपालोचनाद् विरक्तो व्युत्थाय[3] ध्यानयोगेन वक्ष्यमाणप्रकारेण सूक्ष्मः परमात्मा विज्ञानात्मन्येवाव्यतिरेकेणावस्थितः सम्यग् द्रष्टव्यः । सर्वमेव हि कर्मकाण्डमसारतया मन्तव्यमित्यभिप्रायः । स्पष्टमन्यत् ॥ ६३, ६४ ॥

यतश्चैतदेवम्, अतः —

**नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः ।**

कर्मपक्षान्तर्गतेराश्रमपरिग्रहोऽप्यसार इत्यभिप्रायः ।

**अतो यदात्मनोऽपथ्यं परस्य न तदाचरेत् ॥ ६५ ॥**

परस्य प्रकृष्टस्याद्वैतस्य परमात्मनो यदपथ्यं संसारकारणं कर्मादि[4] न तदाचरेत् । ध्यानयोगेनैव तु[6] नित्यं परमात्मनो निदिध्यासनं कुर्यादित्यर्थः । नन्वेवं सति यदृच्छाप्रचारितैव प्राप्नोति, कर्मणोऽनङ्गीकरणात् । मैवम् । परलोकार्थितया हि कर्मणोऽनङ्गीकरणं, क्रियमाणं हि कर्म परलोकारम्भकं मा भूदिति विहितस्याननुष्ठानम् । निषिद्धं पुनरनुष्ठीयमानमेव परलोकारम्भकमिति तत्परिजिहीर्षया निषिद्धेषु यथानिषेधमेव वर्तितव्यम् ॥ ६५ ॥

एवञ्चेत् कर्मसंन्यासिनामपि प्रतिषिद्धार्थवर्जनमविरुद्धं मन्यमान आह —

**सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्दमः ।**
**संयतेन्द्रियता विद्या धर्मः सार्व उदाहृतः ॥ ६६ ॥**

---

१. 'जयमात्रहे' क. पाठः. २. 'न्दप्राप्त्य' ग. पाठः. ३. 'नया व्यु' क. पाठः. ४. 'मादिप' ग. पाठः. ५. 'यः । स्पष्टमन्यत् ।'. ६. 'तु प' क. पाठः.

विधिस्वरूपत्वेऽपि च सत्यादीनामनृतवर्जनादिरूपतया प्रतिषिद्धपक्षीयत्वमेवेत्यविरोधः । ह्रीर्लज्जा । वर्जनीयतया च तदुपन्यासः पुनराजननाभिप्रायेण वा कर्तव्यतायामप्यविरोधः । महत्येवेयं विदुषो लज्जा यत्पारतन्त्र्येण गर्भवासादिक्लेशवज्जन्मसंगतिः । शौचं तु त्रिविधमप्यपवर्गानुगुण्यात् कर्तव्यतयैवोपदिश्यते । धीः प्रज्ञा । धृतिर्धारणा । दमो द्वन्द्वसहिष्णुता । संयतेन्द्रियता स्पष्टैव, रूपादिप्रपञ्चोपरतिध्यानं वा । विद्या ब्रह्मणः साक्षात्करणम् । सर्वं चैतत् सत्यादि तदङ्गतयोपदिश्यमानं कर्मसंन्यासिनामप्यविरुद्धमित्यभिप्रेत्याह —अयं सत्यादिको धर्मः सार्व उदाहृत इति । सर्वेषामयं सार्वः । उदाहृत इत्युदाहरणार्थमेतत् । अन्यदपि भिक्षाटनादि सर्वविषयमविरुद्धमित्यवसेयम् । अतश्च परमहंसानामपि न कामचारतेत्यभिप्रायः । अतः सूक्तः सोपलक्षणादिभेदेन परिव्राजकाश्रमः । अत्र केचिदिमं पारिव्राज्यप्रकारभेदमभ्यसूयन्तः सोपलक्षणमेव पारिव्राज्यं मन्यन्ते । तथाचोक्तं दक्षेण —

"यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती न चाश्रमी ।"

इति । वसिष्ठेनापि—"परिव्राजकः सर्वभूताभयदक्षिणां दत्त्वा प्रतिष्ठेते"त्युपक्रम्य तद्धर्मकलापमभिधायोपसंहृतं "यज्ञोपवीत्युदकमण्डलुहस्तः शुचिर्ब्राह्मणो वृषलान्नवर्जी न हीयते ब्रह्मलोकादि"ति । त्रिदण्डसंयोगेनैवं कमण्डल्वादिसंगतिरित्युक्तमेव । अतोऽनुपलक्षणः परिव्राडिति दुर्भणम् । भिक्षाटनश्लोकस्त्वन्यथैव व्याख्यातः । प्रसिद्धस्वायंभुवादिशास्त्रव्यतिरिक्तानि तु स्मृत्यन्तराण्यस्पष्टमूलत्वादेवैतद्विरोधेऽनादत्यान्येव । किञ्चेहापि शौचस्य सर्वधर्मत्वं, यज्ञोपवीतं च शौचाङ्गम्, अतस्तेनापि सर्वार्थेनैव भाव्यम् । एवञ्चेत् कथं तदभावः परिव्राजकस्याशङ्क्येत । अतोऽप्ययुक्ततैव । समाचारविरोधश्च स्थित एवेत्येषा दिक् । अत्राभिधीयते— अपवर्गार्थं हि पारिव्राज्यं ज्ञानैकसाधनम् । न तत्र कर्मणा प्रयोजनमित्युक्तमेव । यत्तु वाचनिकत्वेन त्रिदण्डादिधारणं, तदप्याद्यपारिव्राज्यविषयमेव । इतरस्य त्वाश्रमनियमानङ्गीकरणं कर्मपक्षीयत्वेन । उक्तं च —'नाश्रमः कारणं

---

१. 'प्यात्तु', २. 'व च क', ३. 'योग इत्यु' क. पाठः, ४. 'नापि भा' ग. पाठः, ५. 'मेवैतत् । वि' क. पाठः.

स्येव । आत्मशुद्धिप्रधानत्वाच्च प्रवृत्तेर्युक्तमेव प्रायश्चित्ताल्पत्वम् । रहस्यप्रकाशश्च लोकतः । विद्वानविद्वत्संनिधौ प्रकाशमपि पापं कृत्वा स्वयमेव वेत्ति, इतरे त्वनेन पापं कृतमित्येवं न जानन्ति, तत् प्रकाशकृतमपि रहस्यमेव । एवं देशकालादिनिमित्तेनाप्यपरिज्ञानेन रहस्यता योज्या ॥ २९६ ॥

एवं रहस्यप्रायश्चित्तानां विषयमुक्त्वाधुना तान्युपदिशति —

**त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम् ।**
**अन्तर्जले विशुध्येत दत्त्वा गां च पयस्विनीम् ॥ २९७ ॥**

त्रिरात्रमुपोष्यान्तर्जले निमग्नोऽघमर्षणं जप्त्वा गां च पयस्विनीं ब्राह्मणाय दत्त्वा विशुध्यतीत्येवं योजना । अन्ये तु त्रिरात्रोपोषितोऽन्तर्जलेऽघमर्षणं जप्त्वा विशुध्येत, गां च पयस्विनीं दत्त्वा विशुध्येत, इत्येवं प्रायश्चित्तद्वयं वर्णयन्ति । तथाच मति पूर्वं चतुर्णामप्याश्रमाणां प्रायश्चित्तम्, उत्तरं तु दानाधिकृतानामेवेति महाविषयतापि शास्त्रस्याभ्युदयाय स्यात् । तथाच स्वयंभुवा दानरहितमेव त्रिरात्रोपोषितस्याघमर्षणं जप्यमुक्तं —

"त्र्यहं तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः ।
मुच्यते पातकैः सर्वैर्जप्त्वा त्रिरघमर्षणम् ॥"

इति । अतो भेदकल्पनापि युक्तैव ॥ २९७ ॥

आग्निकस्य तु ब्राह्मणवधे पर्वेकाहिकं व्रतं प्रायश्चित्तमाह —

**लोमभ्यः स्वाहेति हि वा दिवसं मारुताशनः ।**
**जले सुप्त्वाभिजुहुयाच्चत्वारिंशद्घृताहुतीः ॥ २९८ ॥**

दिवसं मारुताशन इत्युदकपानप्रतिषेधार्थम् । अन्यत्राप्येवं व्याख्येयम् । जले सुप्त्वेति रात्रिमुदके स्थित्वेत्यर्थः । ततः पाकयज्ञविधानेनोपासने लोमभ्यः स्वाहेत्यादिभिः शुक्रियाधीतैश्चत्वारिंशदाज्याहुतीर्जुहुयात् ॥ २९८ ॥

सुरापस्वर्णहारिणोस्तु —

**त्रिरात्रोपोषितो हुत्वा कूश्माण्डीभिर्घृतं शुचिः ।**
**सुरापः स्वर्णहारी तु रुद्रजापी जले स्थितः ॥ २९९ ॥**

कूश्माण्डीभिः "यद्देवा देवहेडनम्" इत्येवमाद्याभिस्तैत्तिरीयाम्नाताभिस्त्रिरात्रोपोषितः सुरापः पूर्ववद् घृतं हुत्वा शुचिः स्यात् । स्वर्णहारी तु त्रिरात्रोपोषित एव नाभिमात्रे जले तिष्ठन् रुद्रं जपञ् शुचिरिति योज्यम् । तथाच भारद्वाजः—

"नाभिदघ्नोदकस्थस्तु रुद्रं ध्यायन् समाहितः ।
त्रिरात्रोपोषितो जप्त्वा स्वर्णहारी विशुध्यति ॥"

इति ॥ २९९ ॥

त्रिरात्रोपोषित एव पूर्ववत्—

**सहस्रशीर्षा(दि)जापाच्छुध्येत गुरुतल्पगः ।**
**गौर्देया कर्मणश्चान्ते पृथगेभिः पयस्विनी ॥ ३०० ॥**

"सहस्रशीर्षा पुरुष" इतीमं षोडशर्चं जप्त्वा गुरुतल्पगः शुध्येत् । एभिश्च "लोमभ्यः स्वाहे"त्यारभ्य पुरुषसूक्तजपान्तकर्माधिकृतैर्होमकर्मणो जपकर्मणश्चान्ते ब्राह्मणाय पयस्विनी गौर्देया पृथक् चैकैकपातकोद्देशेन । होमाद्यनधिकृतैरपि त्रिरात्रमुपोष्य गौर्देया । सर्वत्र च रहस्यप्रकरणे न कामकृताद्यपेक्षया विषयव्यवस्था कल्पनीया । स्वरुचिवैकल्पकत्वेनैव तु व्यवस्था सामर्थ्यकृता वा, यथा होमचोदनास्वधिमताम् । प्रकाशप्रायश्चित्तानां तु विषयव्यवस्था प्रदर्शितैव । रहस्येषु त्वात्मतुष्टिरेव ज्ञानाग्निदग्धकल्मषस्य शुद्धिकारणम् । तथाच रहस्येष्वेव स्वयंभुवाभिहितं—

"यस्मिन् कर्मण्यस्य कृते मनसः स्यादलाघवम् ।
तस्मिंस्तावत् तपः कुर्याद् यावत् तुष्टिकरं भवेत् ॥"

इति । आत्मतुष्टिरेव गुरुलघुत्वोपादाने व्यवस्थाहेतुत्वमुक्तम् । इतरत्र तु परिषच्छास्त्रोपदिष्टं गुरुलघुत्वाद्यालोच्योपदिशेद् , नतु तत्रात्मतुष्ट्या व्यवस्थाहेतुत्वम् ॥ ३०० ॥

एवं चतुर्णां महापातकानामुक्तम् । तत्संसर्गे तु—

**प्राणायामशतं कुर्यात् सर्वपापापनुत्तये ।**
**उपपातकजातानामनिर्दिष्टस्य चैव हि ॥ ३०१ ॥**

---

१. 'पो का', २. 'त्वाकामकृताद्य', ३. 'या न नि', ४. 'ष्टिर्ज्ञाना' ग. पाठः. ५. 'था र' ग. पाठः. ६. 'न' ग. पाठः. ७. 'कारणम्' ग. च. पाठः.

सर्वपापापनुत्तये इत्यविशेषाभिधानेऽपि प्रक्रमानुसारात् सर्वैर्महापातकिभिर्यत् संसर्गनिमित्तं पापं, तदपनुत्तये इत्येवं व्याख्येयम्। न केवलं संसर्गजानां सर्वपापानाम्, उपपातकजातानामप्येतदेव प्रायश्चित्तम्। अनिर्दिष्टप्रायश्चित्तान्तराणामप्येतदेवेति योज्यम् ॥ ३०१ ॥

**ओङ्काराभिषुतं सोमसलिलं पावनं पिबेत्।**
**कृतोपवसनं रेतोविण्मूत्रप्राशने द्विजः ॥ ३०२ ॥**

अहोरात्रमुपोष्यापरेद्युरोङ्कारेण सोममभिषुत्य पावनेन तीर्थोदकेन ततस्तदोङ्काराभिज्ञातं सोमसलिलं पावनं पिबेदिति योज्यम्। स्पष्टमन्यत्। द्विजग्रहणं ब्राह्मणार्थम्, इतरयोः सोमपानप्रतिषेधात्। अद्विजातेर्वा रहस्यप्रायश्चित्तानधिकारज्ञापनार्थम् ॥ ३०२ ॥

यत्तु कर्त्रा स्वयमप्यसंवेदितं, नच्छास्त्रीयत्वेनास्मानेनित्यकर्मानुष्ठातॄणां नैव दोषारम्भकं भवतीत्येवं प्रपञ्चयितुमाह —

**निशायां वा दिवा वापि यदज्ञानकृतं त्वघम्।**
**त्रिष्कालसन्ध्याकरणात् तत् सर्वं विप्रणश्यति ॥**

कृतव्याख्यानः श्लोकः ॥ ३०३ ॥

**शुक्रियारण्यकजपो गायत्र्याश्च सहस्रशः।**
**सर्वपापहरः प्रोक्तो रुद्रैकादशिनी तथा ॥ ३०४ ॥**

आदिष्टप्रायश्चित्तान्तराणामनादिष्टप्रायश्चित्तानां सर्वेषां महापातकादीनां रहस्यानां शुक्रियो जप आरण्यको वा सकृत्कृत एव प्रायश्चित्तम्। गायत्र्यास्तु सहस्रकृत्वः। रुद्राध्यायस्य चैकादशकृत्वः। आरण्यकं ब्राह्मणम्। शुक्रिया मन्त्राः ॥ ३०४ ॥

सर्वत्र च रहस्यं प्रायश्चित्तं[2] कुर्तेऽपि —

**यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः।**
**तत्र तत्र तिलैर्होमः सावित्र्या जप एव वा ॥ ३०५ ॥**

कार्य इति शेषः। द्विजग्रहणमुक्तार्थम् ॥ ३०५ ॥

---

१. 'नाम इ', २. 'तिऽपि' ग. पाठः

रहस्यानि वा प्रकाशानि वा यान्यविज्ञातानि तानि —

**वेदाभ्यासरतं क्षान्तं पञ्चयज्ञक्रियारतम् ।**
**न स्पृशन्तीह पापानि महापातकजान्यपि ॥ ३०६ ॥**

स्पष्टार्थः श्लोकः ॥ ३०६ ॥

यथैवं[1] वेदाभ्यासरतः, स रहस्ये प्रकाशे वा कथञ्चिदकामकृते —

**वायुभक्षो दिवा तिष्ठन् रात्रिं नीत्वाप्सु सूर्यदृक् ।**
**जप्त्वा सहस्रं गायत्र्याः शुध्येद् ब्रह्मवधादृते ॥ ३०७ ॥**

यत्तु विदुषः प्रायश्चित्तभूयस्त्वं, तत् कामकृतप्रकाशविषयं द्रष्टव्यम् । वायुभक्षवचनमुदकपानप्रतिषेधार्थम् । तिष्ठन् रात्रिं नीत्वेति च योज्यम् । स्पष्टमन्यत् ॥ ३०७ ॥

रहस्या[2]द्यधिकृतानां सर्वप्रायश्चित्तान्वाचयत्वेन —

**ब्रह्मचर्यं दया क्षान्तिर्ध्यानं सत्यमकल्कता ।**
**अहिंसास्तेयमद्रोहो दमश्चैते यमाः स्मृताः ॥ ३०८ ॥**

प्रकाशप्रायश्चित्ताधिकृतानामप्यविरोधादेते यमाः प्रत्येतव्याः ॥

पूर्ववदेव —

**स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः ।**
**नियमा गुरुशुश्रूषा शौचाक्रोधप्रदातृताः ॥ ३०९ ॥**

ब्रह्मचर्यं यथाशास्त्रं मैथुनप्रसङ्गः । उपस्थनिग्रहः स्त्र्यनभिलाप इति विवेकः । प्रदातृता तु प्रकर्षेण दानशीलता । स्पष्टमन्यत् ॥ ३०९ ॥

अधुना सर्वपापक्षपणार्थान्यभ्युदयसाधनानि च यानि सान्तपनादीनि तपांसि तत्र तत्र च प्रायश्चित्तार्थमुपदिष्टानि, तेषां स्वरूपं वक्तुमाह —

**पञ्चगव्यं तु गोक्षीरं दधि मूत्रं शकृद् घृतम् ।**
**पीत्वा परेद्युरुपवसेत् कृच्छ्रं सान्तपनं चरन् ॥ ३१० ॥**

पञ्चगव्यवचनमत्रानुक्तकुशोदकान्वितं च यथा स्यादित्येवमर्थम् । गोक्षीरमिति स्वचिरदुग्धोपादानार्थम् । भोजनाय चैतत् प्राशनं, नादृष्टाय ।

---

1. 'सादिर' ङ. ञ. पाठः. 2. 'स्याधि' ग. पाठः.

कृच्छ्रमिति कृच्छ्रधर्मप्राप्त्यर्थम् । तथाच हारीतः — "धारोष्णं तु गव्यं पयो दधिशकृन्मूत्रघृतानि च मन्त्रपूतान्येककालं भुक्त्वा परेद्युरुपवसेत् स सान्तपन इति ॥ ३१० ॥

एतैरेव क्षीरादिभिः

**पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः ।**
**सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥३११॥**

पृथक् सान्तपनद्रव्यैः क्षीरादिभिः कुशोदकान्तैः षडहान्येककालं भोजनं कार्यम् । कुशोदकं च कुशक्वथितमुदकं सर्वत्र प्रत्येतव्यम् । स्पष्टमन्यत् ॥ ३११ ॥

**पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः ।**
**प्रत्येकं प्रत्यहाभ्यस्तैः पर्णकृच्छ्र उदाहृतः ॥**

पर्णः पलाशः । राजीवं पद्मिनी । स्पष्टमन्यत् । पलाशादिपत्रक्वथितेनोदकेन पञ्चरात्रं वर्तितव्यमित्यर्थः । यद्यपि च पर्णकृच्छ्रस्य क्वचिद् विनियोगो नोक्तः, तथापि गमनादेशे पापगुरुत्वापेक्षया प्रत्येतव्यः । अभ्युदयसाधनत्वं तु वक्ष्यत्येव ॥ ३१२ ॥

**तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ।**
**एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः ॥ ३१३ ॥**

स्मृत्यन्तरे तु — "पयो घृतमुदकं वायुं प्रत्यहं तप्तानि, स कृच्छ्र" इत्युक्तम् । तत्र व्याख्यातारो वायोरप्युष्णस्य पानं वर्णयन्ति । तत् पुनर्विचार्यम् । इह तूपवासवचनाद् वायूपादानं तत्रोपवासप्रतिपत्त्यर्थं, न तप्तानीत्यनेन सम्बन्धयितुमिति व्याख्येयम् ॥ ३१३ ॥

**एकभक्तेन नक्तेन तथैवायाचितेन च ।**
**उपवासेन चैकेन पादकृच्छ्रः प्रकीर्तितः ॥ ३१४ ॥**

प्राजापत्यस्य चायं तृतीये भागे पादकृच्छ्रशब्दः प्रयुक्तः । पर्णकृच्छ्रादिष्वप्ययमेवानुसर्तव्यः । स्पष्टमन्यत् ॥ ३१४ ॥

१. 'सूप' [illegible] पाठः. २. 'त्र' ग. पाठः. ३. 'त्याज्ञोप' ङ. ग. पाठः. ४. 'म' ग. पाठः.

**यथाकथञ्चित् त्रिगुणः प्राजापत्योऽयमुच्यते।**
**अयमेवातिकृच्छ्रः स्यात् पाणिपूरान्नभोजिनः॥ ३१५॥**

यथाकथञ्चिदित्येकभक्तादिक्रमस्याविवक्षार्थम्। एतदपि पर्णकृच्छ्रादिष्वप्युक्तं द्रष्टव्यम्। एष्वेव प्राजापत्यार्थेषु भोजनकालेषु पाणिपूरान्नभोजिनः कर्तुरयमेवातिकृच्छ्रसंज्ञः प्रत्येतव्यः। पाणिः पूर्यते यावतान्नेन तत् पाणिपूरान्नं, तद् भुङ्क्ते यः स पाणिपूरान्नभोजी। भोजनाधिकाराच्च भोजनार्थं यावत् सकृदादीयते, तावत् प्रत्येतव्यम्। तथाचाह मनुः—"एकैकं ग्रासमश्नीयात्" इति॥ ३१५॥

**कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्।**
**द्वादशाहोपवासेन पराकः परिकीर्तितः॥ ३१६॥**

एकविंशतिरात्रं पयोव्रतता कृच्छ्रातिकृच्छ्रः। द्वादशरात्रमभोजनं पराकः। अत्र च पादादिभागाभावः[1]॥ ३१६॥

**पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम्।**
**एकैकमुपवासश्च कृच्छ्रः सौम्योऽयमुच्यते॥ ३१७॥**

पिण्याकः खलः। आचाम ओदनास्रावणं, मण्ड इति यावत्। तक्रं मथितम्। अम्बुसक्तव उदकसक्तवः। एषामेकैकेन प्रत्यहम्। पञ्चमेऽह्न्युपवास इत्येष सौम्यो नाम कृच्छ्रः। सोमस्यात्रार्षमिति[2] सौम्यः। एवं प्राजापत्यादिष्वप्यार्षेयानिमित्तैवाख्या प्रत्येतव्या॥ ३१७॥

य एते पिण्याकादयः—

**एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम्।**
**तुलापुरुष इत्येष ज्ञेयः पञ्चदशाह्निकः॥ ३१८॥**

तुलापुरुषसंज्ञा महापातकादिभिः पापैर्युक्तः पुरुषोऽनेन तपसा तुलितः पापेभ्योऽधिकतया धर्म एवावतिष्ठते इत्येवमर्था। स्पष्टमन्यत्॥

**तिथिवृद्ध्याचरेत् पिण्डाञ् शुक्ले शिख्यण्डसंमितान्।**
**एकैकं ह्रासयेद् पिण्डान् कृष्णे चान्द्रायणं चरन्॥**

---

१. 'ग' ङ. पाठः. २. 'र्षम्। ए' ग. पाठः.

तिथिवृद्ध्येति । शुक्लपक्षादौ प्रतिपत्प्रभृति ग्रासोपचयेन पाणमासा यावदाचरेद्, अश्नीयादित्यर्थः । ततः प्रतिपद्यपि पञ्चदशैव ग्रासान् भुक्त्वा द्वितीयाप्रभृत्येकैकं ग्रासं कृष्णपक्षे ह्रासयेत् । एतद्यवमध्यं चान्द्रायणम् । स्पष्टमन्यत् ॥ ३१९ ॥

**यथाकथञ्चित्पिण्डानां चत्वारिंशच्छतद्वयम् ।**
**मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥ ३२० ॥**

यथाकथञ्चिदिति "पिपीलिकामध्यतया अष्टग्रासेन शिशुचान्द्रायणप्रकारेण वे"ति स्मृत्यन्तरोक्तचान्द्रायणप्रकारोपसंग्रहणार्थम् । चत्वारिंशच्छतद्वयमिति यवमध्येषु प्रतिपद्यपि पञ्चदशग्रासप्राप्त्यर्थम्, चान्द्रायणमथापरमिति । वाशब्दाध्याहारेण अथवान्य एवायं चान्द्रायणप्रकारोपदेश इत्यर्थः ॥ ३२० ॥

यान्येतानि सान्तपनादीनि कृच्छ्राण्युक्तानि, एषामेकैकं—

**कुर्यात् त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा ।**
**पवित्राणि जपेत् पिण्डं गायत्र्या चाभिमन्त्रयेत् ॥**

निगदोक्तः श्लोकः ॥ ३२१ ॥

**अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु ।**
**धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम् ॥ ३२२ ॥**

यानि परिषदा नादिश्यन्ते, तान्यनादिष्टानि, रहस्यानीत्यर्थः । प्रायश्चित्तान्तरं वा येष्वनादिष्टं तान्यनादिष्टानि । यस्तु निर्दोष एव धर्मार्थं चान्द्रायणं चरेत्, स चन्द्रस्य सलोकतामेति । (यथा?) चन्द्रमण्डले स्वर्गोपभोगं प्राप्नोतीत्यर्थः ॥ ३२२ ॥

यस्त्वनभिसन्धाय फलमात्मसंस्कारार्थं कुर्यात् —

**कृच्छ्रकृद् धर्मकामस्तु महतीं श्रियमश्नुते ।**
**यथागुरु क्रतुफलं प्राप्नोति च न संशयः ॥ ३२३ ॥**

कृच्छ्रशब्दोऽत्र चान्द्रायणस्यापि ग्राहकः । कृच्छ्रकृच्चान्द्रायणकृद्वा धर्मकामश्चोदितानुष्ठानमात्रार्थी न फलमिच्छतीत्यर्थः । महती श्रीर्दैवया-

नेन मार्गेणैन्द्र उपभोगः । यथागुर्विंति । अल्पेन सान्तपनादिनाल्पस्य क्रतोः, तथा गुरुणा पराकचान्द्रायणादिना गुरुतरस्य क्रतोर्यत् फलं, तत् प्राः [illegible] ॥ ३२३ ॥

[illegible] "यस्मिन् देशे मृगः कृष्ण" इत्यारभ्य "यथागुरु क्रतुफलं प्राप्नोति च न संशयः" इत्येवमन्ता याज्ञवल्क्येनोपदिष्टाः —

श्रुत्वैतानृषयो धर्मान् याज्ञवल्क्येन भाषितान् ।
इदमूचुर्महात्मानो योगीन्द्रममितौजसम् ॥ ३२४ ॥

य इदं धारयिष्यन्ति धर्मशास्त्रमतन्द्रिताः ।
इह लोके यशः प्राप्य ते यास्यन्ति त्रिविष्टपम् ॥ ३२५ ॥

किञ्च —

विद्यार्थी चाप्नुयाद् विद्यां धनकामो धनानि च ।
आयुष्कामस्तथैवायुः श्रीकामो महतीं श्रियम् ॥ ३२६ ॥

तथा —

श्लोकत्रयमपि ह्यस्माद् यः श्राद्धे श्रावयिष्यति ।
पितॄणां तत्र तृप्तिः स्यादानन्त्याय न संशयः ॥ ३२७ ॥

किञ्च —

ब्राह्मणः पात्रतां याति क्षत्रियो विजयी भवेत् ।
वैश्यश्च धान्यधनवानस्य शास्त्रस्य धारणात् ॥ ३२८ ॥

ग्रन्थतोऽर्थतश्चेति शेषः ॥ ३२८ ॥

इदं चान्यत् —

य इदं श्रावयेद् विप्रान् द्विजः पर्वसु संयतः ।
अश्वमेधफलं तस्य तद् भवाननुमन्यताम् ॥ ३२९ ॥

स्पष्टार्थः श्लोकः ॥ ३२९ ॥

---

१. 'र्थाः', २. 'काः' ङ. पाठः.

यदेतन्मुनिभिः प्रार्थितं —

**श्रुत्वैतद् याज्ञवल्क्यस्तु प्रीतात्मा मुनिभाषितम् ।**
**एवमस्त्विति होवाच नमस्कृत्वा स्वयंभुवे ॥ ३३० ॥**

इदमिदं चास्त्विति मुनिभिः प्रार्थितोपन्यासो मुनीनां धर्मोपदेशे कृते परितोषज्ञापनार्थतयास्य[1] धर्मशास्त्रस्याविचिकित्सं प्रामाण्यप्रतिपत्त्यर्थं, याज्ञवल्क्यस्य चैवमेवास्त्विति प्रीतात्मनः प्रतिवचनं सम्यगेभिर्मदुक्तं धर्मशास्त्रमवधृतं, भविष्यति अस्माद् धर्मशास्त्राद् वर्णिनामाश्रमिणां निःश्रेयसमित्युपदेशसाफल्यप्रतिपत्त्यर्थं, ब्राह्मणाश्च परिषद्धर्मेणावस्थिता यद् ब्रूयुरिदमेवमस्त्विति, तत् तथैव स्यादिति ब्राह्मणवचनस्य धर्मप्रमाणताप्रतिपत्त्यर्थं, गुरुसन्निधौ च न शिष्यैः स्वातन्त्र्येण[2] धर्मावधारणं गुर्वननुमतैः कार्यमित्येवं सदाचारपरिपालनार्थम् । नमस्कृत्वा स्वयंभुव इति । मनवे नमस्कृत्वे[3]त्यर्थः । एतच्चाचारपरिपालनार्थम् । नह्यागमिकेऽर्थे गुरुमनभिपूज्य स्वातन्त्र्येण किञ्चिद् वक्तव्यमित्यभिप्रायः । मानवश्चा[4]यं सर्वोऽर्थः स्मार्त इत्येतदपि तन्नमस्कारेणैव स्पष्टीकृतम् । ततश्च वेदविरोधवन्मनुविरोधेऽपि स्मृत्यन्तराणामप्रामाण्यम् । स्मृत्यन्तरानुसारेणैव मानवेऽपि सन्दिग्धार्थनिर्णयः, मानवीय एवार्थः स्मृत्यन्तरेऽपि यस्मात् । अतः सूक्तं—"नमस्कृत्वा स्वयंभुवे" इति ॥ ३३०[5] ॥

लब्ध्वा रहस्यानि सुदुर्लभानि यजूंषि शुक्लानि विवस्वतो यः ।
स्वर्गापवर्गावकरोत् प्रकाशौ जयत्यसौ ब्रह्मविदेकहंसः ॥
प्रज्ञापराधादिह यद् दुरुक्तं नोक्तं च तत् सर्वमनाकुलिम्ना ।
कृपालुभिः सम्यगमत्सरेण विवेचनीयं स्वमतिप्रभावात् ॥

इति परमभट्टारकयोगीन्द्रप्रणीते[6] धर्मशास्त्रे[7]
विश्वरूपकृतविवरणबालक्रीडायां
तृतीयोऽध्यायः ॥

---

समाप्तश्चायं ग्रन्थः ।

शुभं भूयात् ।

---

१. 'स्य शा', २. 'र्वनु', ३. 'स्कारं कृत्वे', ४. 'वीयश्चा' क. पाठः. ५. 'त् ॥ प' च. पाठः. ६. 'रयो' ङ. पाठः. ७. 'संहितायां वि' च. पाठः.

# ग्रन्थान्तरोपात्तवाक्यानि ।

| पृष्ठं | वाक्यं | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १ | 'एतद्वै परमं तपो—' | | |
| ,, | 'ऊनद्विवार्षिकं प्रेतं—' | स्वायम्भुवम् | |
| २ | 'नात्रिवर्षस्य कर्तव्या—' | ,, | |
| ,, | 'द्विवर्षे प्रेते मातापित्रो—' | | पारस्करः |
| ,, | 'नृणामकृतचौलानाम्—' | स्वायम्भुवम् | |
| ,, | 'निर्वृत्तचौलकानां तु—' | | |
| ३ | 'दक्षिणामुखा अपोऽवतीर्य—' | | शङ्खः |
| ,, | 'जन्मनाम्नोरवेदने' | | |
| ५ | 'प्रेतात्र स्नाहि' | | |
| ६ | 'प्रेतस्पृशो ग्रामं न प्रविशेयुरा—' | | पारस्करः |
| ,, | 'अनाथं ब्राह्मणं प्रेतं—' | | पराशरः |
| ७ | 'नाशौचं सूतके पुंसः—' | | वसिष्ठः |
| ,, | 'जन्ममरणयोस्तुल्योपनिपात—' | स्मृत्यन्तरम् | |
| ८ | 'गर्भपतने सपिण्डानां—' | | वसिष्ठः |
| ९ | 'यद्यु मा मारयिष्यति यज्ञं—' | आम्नायः | |
| १० | 'सर्वेषां शावमाशौचं—' | स्वायम्भुवम् | |
| ११ | 'आपो हि ष्ठा' | | |
| ,, | 'दशाहं शावमाशौचम्' | | स्वयम्भूः |
| ,, | 'आ वा सञ्चयनादस्थाम्' | | ,, |
| ,, | 'त्र्यहमेकाहमेव वा' | | ,, |
| ,, | 'ब्राह्मणस्य त्रिरात्रं तु—' | | पराशरः |
| ,, | 'शावमाशौचं दशरात्र—' | | गौतमः |
| ,, | 'ब्राह्मणो दशरात्रेण—' | | वसिष्ठः |
| ,, | 'एकाहाच्छुध्यते विप्रो—' | | |
| १२ | 'व्याधितस्य कदर्यस्य—' | | |
| ,, | 'एकाहाच्छुध्यते विप्रः' | | दक्षः |
| ,, | 'नामधारकविप्राणां—' | | |
| ,, | 'दन्ते जातेऽनुजाते च—' | | पराशरः |
| ,, | 'पिण्डनिवृत्तिः सप्तमे—' | | |
| १३ | 'पिण्डकरणे प्रथमः—' | | |
| ,, | 'निवर्तते चतुर्थ' | | |

| पृष्ठं | वाक्यं | ग्रन्थनाम | कर्तृनाम |
| --- | --- | --- | --- |
| १३ | 'सम्पर्केषु निवृत्तानां—' | | पराशरः |
| ,, | 'पिण्डस्त्वावर्तते त्रिषु' | | शङ्खः |
| ,, | 'एकपिण्डाः पृथक्शौचाः' | | |
| ,, | 'मृते सूते तु दासानां—' | | |
| ,, | 'वर्णानामानुलोम्येन—' | | |
| ,, | 'राज्ञां च कार्यविरोधात्' | | गौतमः |
| १४ | 'सूतकं मातुरेव स्यात्' | | |
| ,, | 'निरस्य तु पुमाञ्छुक्र—' | | |
| ,, | 'बैजिकादभिसम्बन्धात्—' | | |
| ,, | 'अप्रौढायां तु कन्यायां—' | | |
| ,, | 'यथोक्तेनैव कल्पेन—' | | |
| ,, | 'विशुध्यति त्रिरात्रेण—' | | |
| १५ | 'सब्रह्मचारिण्येकाह—' | | |
| ,, | 'मृद्भिरद्भिश्च गात्राणि' | स्वायम्भुवम् | |
| १६ | 'उत्कृष्टं चापकृष्टं च—' | | नारदः |
| १८ | 'भोजनाभ्यञ्जनाद्—' | | |
| १९ | 'यमिच्छेत् तमावसेत्' | | |
| २० | 'ऐकाश्रम्यं त्वाचार्याः—' | | गौतमः |
| ,, | 'अथात्मन्यग्नीन् समारोप्य' | | |
| ,, | 'अनवेक्षमाणोऽरण्यं गच्छेत्' | | |
| २१ | 'ऐकाश्रम्यं त्वाचार्याः' | | गौतमः |
| ,, | 'पुनर्दारक्रियां कुर्यात्—' | | |
| २५ | 'सर्व एते पुण्यलोका—' | आम्नायः | |
| ,, | 'अनधीत्य द्विजो वेदा—' | स्वायम्भुवम् | |
| ,, | 'रागिणामेव गार्हस्थ्यम्' | | |
| ,, | 'यमिच्छेत् तमावसेत्' | | |
| २६ | 'हिंसानुग्रहयोरनारम्भी' | | गौतमः |
| ,, | 'वाग्दण्डोऽथ मनोदण्डः' | | |
| ,, | 'भिक्षार्थी ग्राममियाज्जघन्य—' | | गौतमः |
| २७ | 'अष्टौ भिक्षाः समादाय—' | | संवर्तः |
| ,, | 'अथान्यः परिव्राडेक—' | श्रुतिः | |
| २९ | 'यस्यैतल्लक्षणं नास्ति—' | | दक्षः |

| पृष्ठं | वाक्यं | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| २९ | 'परिव्राजकः सर्वभूताभय—' | | वसिष्ठः |
| ,, | 'यज्ञोपवीत्युदकमण्डलु—' | | ,, |
| ३० | 'यज्ञोपवीत्युदकमण्डलु—' | | ,, |
| ,, | 'मुण्डोऽममोऽपरिग्रह' | | |
| ,, | 'ब्राह्मणकुले वा यल्लभेत—' | | |
| ,, | 'मुण्डोऽममोऽपरिग्रह' | | |
| ,, | 'एकशाटीपरिहितो—' | | |
| ,, | 'अथान्यः परिव्राडेक—' | स्मृत्यन्तरम् | |
| ,, | 'व्युत्थायाथ भिक्षा—' | आम्नायः | |
| ,, | 'बाल्यं पाण्डित्यं च—' | | |
| ,, | 'ततो व्युत्थाय मौनं—' | | |
| ,, | 'स ब्राह्मणः केन स्यात्—' | | |
| ३१ | 'विना यज्ञोपवीतेन—' | | |
| ३३ | 'वेत्थ यथेति व्योमाहुत्या' | श्रुतिः | |
| ,, | 'तस्मिन्नेतस्मिन्नग्नौ —' | ,, | |
| ३९ | 'उशन्ति तिलकं क्लोम—' | | |
| ,, | 'पक्वाशयादधो नाभे—' | | |
| ४२ | 'अनियतं मूत्रपुरीषम्' | | |
| ४३ | 'आर्षं धर्मप्रवचनं—' | | स्वयम्भूः |
| ४४ | 'उत्सेकं जलधेर्दृष्ट्वा—' | | |
| ४५ | 'अथ वस्तूनि षट् पञ्च—' | | |
| ,, | 'आदावुल्लोप्यकस्याथ—' | | |
| ,, | 'स्वयं वस्तुषण्मात्रा' | | |
| ४७ | 'समिष्टयजुषा स्वाहा वातेधा' | | |
| ,, | 'यमक्षितमक्षितयः पिबन्ति' | | |
| ४८ | 'सूर्य आत्मा जगतस्तस्थुषश्च' | | |
| ५० | 'अथ खलु क्रतुमयोऽयं पुरुषः' | आम्नायः | |
| ५३ | 'यथैकस्मिन् घटाकाशे—' | | |
| ५४ | 'धूमपूर्णघटानां च—' | | |
| ६० | 'तस्मिन् शुक्लमुत नील—' | आम्नायः | |
| ६३ | 'न तत्र रथा' | ,, | |
| ,, | 'अथ रथान् रथयोगान्—' | ,, | |

| पृष्ठं | वाक्यं | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ६४ | 'एतद् यो वेत्ति तं प्राहुः—' | | व्यासः |
| ,, | 'द्वे वा व ब्रह्मणो रूपे—' | आम्नायः | |
| ६८ | 'चोदना हि भूतं भवन्तं—' | | |
| ,, | 'नान्यत् किञ्चनेन्द्रियम्' | | |
| ,, | 'तदप्येते श्लोकाः—' | | |
| ,, | 'तमेतं वेदानुवचनेन—' | आम्नायः | |
| ,, | 'अष्टौ ग्रासा मुनेर्भक्तम्' | | |
| ७० | 'न च पद्मासनोयोग' | | दक्षः |
| ७३ | 'सह तत एव प्राक् प्रवव्राज' | आम्नायः | |
| ,, | 'इत्थं वा इमेऽमुष्मिन् —' | ,, | |
| ,, | 'कामकारकृतं पापं—' | | व्यासः |
| ७४ | 'इह दुश्चरितैः केचित्—' | | |
| ७५ | 'ब्रह्म यस्त्वननुज्ञात—' | | मनुः |
| ७६ | 'तस्मादेवंविच्छ्रोत्रियस्य—' | आम्नायः | |
| ,, | 'स वा एष निरिन्द्रियो—' | ,, | |
| ,, | 'मणिमुक्ताप्रवालानि—' | | मनुः |
| ७७ | 'कुनखी कृच्छ्रं द्वादशरात्रं—' | | वसिष्ठः |
| ७८ | 'प्रायश्चित्तीयते नरः' | | मनुः |
| ,, | 'अकुर्वन् विहितं कर्म—' | | ,, |
| ७९ | 'धर्ममर्थं च कामं च—' | | |
| ,, | 'कामात्मता न प्रशस्ता' | | |
| ८० | 'इयं विशुद्धिरुदिता—' | | मनुः |
| ,, | 'अकामतः कृते पापे—' | | ,, |
| ,, | 'कामकारकृतेऽप्याहु—' | | ,, |
| ,, | 'अनभिसन्धिकृते प्राय—' | | वसिष्ठः |
| ,, | 'एनस्विभिरनिर्णिक्तै—' | | |
| ,, | 'कृतनिर्णेजनांश्चैनान्—' | | |
| ,, | 'यस्योभयं हविरार्त्ति—' | | |
| ८१ | 'कामतो ब्राह्मणवधे—' | | |
| ,, | 'इन्द्रो यतीन् सालावृकेभ्यः—' | श्रुतिः | |
| ,, | 'अभिशस्यमानं याजयेत्' | ,, | |
| ,, | 'एतेन इन्द्रो देवापः—' | | |

| पृष्ठं | वाक्यं | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ८१ | 'सर्वां ह वै पापकृत्यां—' | | |
| ,, | 'पारीक्षिता यजमाना—' | | |
| ,, | 'अकामतः कृतं पापं—' | | मनुः |
| ,, | 'कामतस्तु कृतं मोहात्—' | | ,, |
| ८२ | 'भिन्ने जुहोति' | | |
| ,, | 'हविष्यभुग् वानुसरेद्—' | | |
| ८३ | 'अस्यास्मिन् लोके—' | | आपस्तम्बः |
| ,, | 'मतिपूर्वमनिर्देश्यं—' | | |
| ,, | 'सुरायाश्चाज्ञाने तप्तकृच्छ्र' | | वसिष्ठः |
| ,, | 'अज्ञानाद् वारुणीं पीत्वा—' | | |
| ८४ | 'तरति सर्वं पाप्मानं' | | |
| ,, | 'नो जिह्मायन्तो नरकं पताम' | मन्त्रवर्णः | |
| ,, | 'कामकारकृतं पापं—' | | व्यासः |
| ८६ | 'यद्वा तद्वा परद्रव्य—' | | मनुः |
| ,, | 'स्तेनो हिरण्यस्य सुरां—' | आम्नायः | |
| ,, | 'हिरण्यमिति जातरूप—' | श्रुतिः | |
| ,, | आग्नेयो वै ब्राह्मणः—' | | चरकाः |
| ,, | 'न सुवर्णं ब्राह्मणेभ्यो—' | | ,, |
| ,, | 'ब्राह्मणसुवर्णहरणं च' | | वसिष्ठः |
| ८७ | 'विज्ञेया त्रिविधा सुरा' | | |
| ,, | 'अथ यन्मल्यमासीत्—' | अग्नीषोमीयब्राह्म- | चरकाः |
| ,, | 'तस्माद् ब्राह्मणः सुरां—' | ,, [णम् | ,, |
| ,, | 'निषेकादीनि कर्माणि—' | | मनुः |
| ,, | 'तत्रास्य माता सावित्री—' | | |
| ,, | 'आचार्यपुत्रशिष्य—' | | वसिष्ठः |
| ,, | 'माता मातृष्वसा—' | | नारदः |
| ८८ | 'आततायिनं हत्वा—' | | |
| ,, | 'स्वाध्यायिनं कुले जातं—' | | |
| ,, | 'गुरुं वा बालवृद्धौ वा—' | | |
| ,, | 'अपि वेदान्तगं रणे' | | |
| ,, | 'जिघांसन्तं जिघांसीयात्' | | |
| ,, | 'ब्राह्मणो न हन्तव्यः' | आम्नायः | |

| पृष्ठं | वाक्यं | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ८८ | 'न हिंस्यात् सर्वा भूतानि' | | |
| ,, | 'रागाद् द्वेषात् प्रमादाद् वा—' | | |
| ,, | 'स्पृष्टश्चेद् ब्राह्मणवधे—' | | |
| ,, | 'अन्यायेन गृहीतस्वश्च' | | लोकयान्त्रिकाः |
| ,, | 'तमाहुर्ब्रह्मघातकम्' | | |
| ८९ | 'पञ्चमश्चाचरंस्तैः' | | |
| ,, | 'ब्राह्मणाभिशंसने दोषस्तावान्' | | |
| ,, | 'द्विरनेनसि' | | |
| ,, | 'ब्राह्मणमनृतेनाभिशस्य—' | | वसिष्ठः |
| ,, | 'योऽवमन्येत ते तूभे—' | | मनुः |
| ९० | 'ब्रह्मोज्झो वेदनिन्दा च—' | | ,, |
| ,, | 'छत्राकं विड्वराहं च—' | | ,, |
| ,, | 'दुर्बलहिंसायां च—' | | गौतमः |
| ९१ | 'निक्षेपस्यापहरणं—' | | मनुः |
| ,, | 'रेतःसेकः स्वयोन्यासु' | | ,, |
| ९२ | 'ब्रह्महसुरापगुरुतल्पग' | स्मृत्यन्तरम् | |
| ,, | 'मातृपितृयोनि—' | ,, | |
| ,, | 'स्नुषायां गवि च—' | ,, | |
| ९३ | 'अत ऊर्ध्वमुपपतनीयानि—' | | शङ्खः |
| ,, | 'क्षीरजतगोस्तैन्यं—' | | सुमन्तुः |
| ,, | 'अथोपपातकान्यग्न्युत्सादि' | | शातातपः |
| ,, | 'सूर्याभ्युदितः सूर्याभिनिर्मुक्त' | | वसिष्ठः |
| ९४ | 'ब्रह्महा [illegible]—' | | शङ्खः |
| ,, | 'प्रायश्चित्तमुपासीनो—' | | ,, |
| ,, | 'ब्राह्मणो ब्राह्मणं हत्वा—' | | शातातपः |
| ,, | 'स यदा [illegible]—' | जाबालश्रुतिः | |
| ९५ | 'उत्क्रान्ते [illegible]—' | | कात्यायनः |
| ,, | 'अथापरं भ्रूणह[illegible]—' | | वसिष्ठः |
| ,, | '[illegible]—' | | शङ्खः |
| ,, | 'अत ऊर्ध्वं [illegible]' | | ,, |
| ,, | 'नि[illegible]—' | | ,, |
| ,, | 'ब्राह्मणो ब्राह्मणं—' | | |

| पृष्ठ | वाक्यं | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ९६ | 'यजेत वाश्वमेधेन' | | मनुः |
| ,, | 'तस्माद्राष्ट्र्यश्वमेधेन यजेत' | श्रुतिः | |
| ,, | 'अन्ययज्ञेऽप्यग्निष्टुदन्तश्चेत्' | | गौतमः |
| ,, | 'भ्रूणहत्याया वा एषो—' | काठकम् | |
| ९७ | 'पतितो ह्यात्मानमुद्धरेत्—' | | |
| ,, | 'न विक्रीणीयादविक्रेयाणि' | | |
| ,, | 'तिलमधुगुलघृत—' | | |
| ,, | 'पतितो ह्यात्मानमुद्धरेत्' | श्रुतिः | |
| ,, | 'रागद्वेषादलभ्यमाने—' | | सुमन्तुः |
| ,, | 'ब्रह्महसुरापगुरुतल्पग—' | | ,, |
| ,, | 'ब्रह्महा संवत्सरं कृच्छ्रं—' | | ,, |
| ,, | 'अतोऽर्धमर्धं क्षत्रिय—' | | ,, |
| ,, | 'कर्म स्मार्तं विवाहाग्नौ' | | |
| ,, | 'जायापत्योर्न विभागो—' | | |
| ९८ | 'आ शुद्धेः संप्रतीक्ष्यो हि—' | | |
| ,, | 'चतुर्षु वर्णेषु प्रमाप्य—' | | शङ्खः |
| ,, | 'सर्वेषामन्योन्यापकृष्टवधे—' | | |
| ,, | 'पूर्वयोर्वर्णयोर्वेदाध्यायिनं—' | | आपस्तम्बः |
| १०० | 'भ्रूणहाग्निमुपसमाधाय —' | | वसिष्ठः |
| ,, | 'प्रास्येदात्मानमग्नौ—' | स्मृत्यन्तरम् | |
| ,, | 'त्रिःसंहितामधीत्यातो—' | | |
| ,, | 'भ्रूणहाग्निमुपसमाधाय—' | | वसिष्ठः |
| १०१ | 'कृतवापनो वा निवसेद्—' | | मनुः |
| ,, | 'ब्राह्मणार्थे गवार्थे वा—' | | ,, |
| ,, | 'अन्तरा वा ब्राह्मणान्—' | | शङ्खः |
| १०३ | 'जपेद् वा नियताहार—' | | मनुः |
| १०४ | अष्टौ ग्रासा मुनेर्भक्तम्' | | |
| ,, | 'द्विजातिकर्मभ्यो हानि—' | | गौतमः |
| ,, | 'भैक्षाहारो वा सरस्वतीं—' | | हारीतः |
| १०५ | 'राजार्थे ब्राह्मणार्थे—' | | वसिष्ठः |
| ,, | 'लक्ष्यं शस्त्रभृतां वा—' | | मनुः |
| ,, | 'प्रास्येदात्मानमग्नौ—' | | |

| पृष्ठं | वाक्यं | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १०५ | 'ब्राह्मणस्तपसैव च' | | |
| ,, | 'गुरुतल्पगः सूर्मी—' | | आपस्तम्बः |
| ,, | 'मिथ्यैतदिति हारीतो—' | | ,, |
| ,, | 'ओ[illegible]' | | ,, |
| ,, | 'अनाशकेन कर्शितो—' | काठकम् | |
| ,, | 'योऽश्वमेधेन यजते—' | | |
| ,, | 'अर्के चेन्मधु विन्देत—' | शाबरभाष्यम् | |
| १०६ | 'तेनैव पथा मध्वर्थिनः—' | तथा | |
| १०७ | 'ब्रह्महा द्वादशाब्दानि' | | मनुः |
| ,, | 'लक्ष्यं शस्त्रभृतां वा स्याद्' | | ,, |
| ,, | जपेद् वा नियतो—' | | ,, |
| ,, | 'कृतवापनो वा निवसेद्—' | | ,, |
| ,, | 'एवं दृढव्रतो नित्यं—' | | ,, |
| ,, | 'हत्वा गर्भमविज्ञातं—' | | ,, |
| १०८ | 'गुरुतल्पगः सूर्मी—' | | आपस्तम्बः |
| ,, | 'मिथ्यैतदिति हारीतः' | | ,, |
| ,, | 'यो ह्यात्मानं परं वा—' | | ,, |
| ,, | 'सर्वां ब्रह्महत्यामपहन्ति—' | आम्नायः | |
| १०९ | 'अग्नौ सक्ति[illegible]—' | स्मृत्यन्तरम् | |
| ,, | 'ब्रह्महाग्निमुपसमाधाय' | | हारीतः |
| ,, | 'राजार्थे ब्राह्मणार्थे—' | | ,, |
| ,, | 'द्वादशवर्षाण्यात्मना—' | | ,, |
| ,, | 'कृतवापनो वा' | | मनुः |
| ,, | 'एवं दृढव्रतो नित्यम्' | | ,, |
| ,, | 'अतोऽन्यतमास्थाय—' | | ,, |
| ११० | 'हत्वा गर्भमविज्ञातं—' | | ,, |
| ,, | 'तुरीयो ब्रह्महत्यायाः—' | | ,, |
| ,, | '[illegible] वा नि[illegible]—' | | ,, |
| ,, | '[illegible]' | | |
| ,, | 'ओ[illegible]' | | आपस्तम्बः |
| १११ | '[illegible]—' | स्मृत्यन्तरम् | |
| ,, | '[illegible]—' | आम्नायः | |

| पृष्ठं | वाक्यं | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ११९ | 'आवेदनेन हि ब्राह्मणो—' | | |
| ,, | 'राजन्यवैश्यौ चेजानौ' | | मनुः |
| ,, | 'अत्र ह्येष्यदपत्यं भवति' | श्रुतिः | |
| ,, | 'ततोऽत्रिः संबभूव' | आम्नायः | |
| ,, | 'तस्मादप्यात्रेय्या—' | ,, | |
| ११२ | 'बहूनां समवेतानां—' | | हारीतः |
| ,, | 'एतेनैव विधिना आ—' | | आपस्तम्बः |
| ,, | 'सर्वस्वं दत्त्वा द्वादशा—' | | |
| ,, | 'उक्त्वा चैवानृतं साक्ष्ये —' | | मनुः |
| ११३ | 'दुर्बलहिंसायां चापि—' | | गौतमः |
| ,, | 'सुरां पीत्वा द्विजो मोहाद्—' | | मनुः |
| ,, | 'पतिलोकं न सा याति—' | | |
| ,, | 'सुरापस्य ब्राह्मणस्य—' | | गौतमः |
| ,, | 'सुरा वै मलमन्नानां—' | | मनुः |
| ११४ | 'सुरां पीत्वा द्विजो मोहात्' | | ,, |
| ,, | 'मद्यपाने त्वसुरायाः—' | | वसिष्ठः |
| ,, | 'कणान् वा भक्षयेदब्दं—' | | मनुः |
| ,, | 'सुरां पीत्वा द्विजो—' | | ,, |
| ,, | 'सुरापोऽग्नितसम्—' | | शङ्खः |
| ,, | 'अथवा बालचीरवासाः—' | | ,, |
| ,, | 'पतितो ह्यात्मानमुद्धरेत्—' | | |
| ११५ | 'समीक्ष्य निपुणं धर्मम्—' | | |
| ,, | 'वत्सरं वा कणानश्नन्—' | | संवर्तः |
| ,, | 'बालवासा जटी—' | | |
| ,, | 'सुरां पीत्वा स्तेयं कृत्वा—' | | आपस्तम्बः |
| ,, | 'महापातकसंयुक्ताः—' | | आङ्गिरसः |
| ,, | 'कालस्य तु यथोक्तस्य—' | | ,, |
| ,, | 'अज्ञानाद् वारुणीं पीत्वा—' | | मनुः |
| ११६ | 'अज्ञानात् प्राश्य विण्मूत्रं—' | | ,, |
| ,, | 'संस्कारेणैव शुध्यति' | | ,, |
| ,, | 'मद्यं नित्यं ब्राह्मणः' | | |
| ,, | 'संस्कारेणैव शुध्यति' | | मनुः |

| पृष्ठं | वाक्यं | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ११६ | 'मतिपूर्वमनिर्देश्यं—' | | मनुः |
| ,, | 'सुरां पीत्वा द्विजो मोहाद्—' | | ,, |
| ११७ | 'पतत्यर्धं शरीरस्य—' | स्मृत्यन्तरम् | |
| ,, | 'सुरापस्य प्रायश्चित्तं—' | | सुमन्तुः |
| ,, | 'प्रायश्चित्तार्धमर्हन्ति—' | स्मृत्यन्तरम् | |
| ११८ | 'एतदेव व्रतं कुर्याद्—' | | मनुः |
| ,, | 'सा चेत् पुनः प्रदुष्येत—' | | ,, |
| ,, | 'यक्षरक्षःपिशाचान्नं—' | | ,, |
| ,, | 'अमेध्ये वा पतेन्मत्तो—' | | ,, |
| ,, | 'यस्य कायगतं ब्रह्म—' | | ,, |
| ११९ | 'ब्राह्मणसुवर्णहरणे—' | | वसिष्ठः |
| १२० | 'सुवर्णस्तेयकृद् विप्रो—' | | मनुः |
| ,, | 'ततो मुसलमादाय—' | | ,, |
| ,, | 'स्वतन्त्रस्तु स संताप्य—' | | संवर्तः |
| ,, | 'एतैर्व्रतैः' | | ,, |
| १२१ | 'ब्राह्मणो न हन्तव्यः' | | |
| ,, | 'सुरा न पेया' | | |
| ,, | 'सुवर्णस्यापहरणे—' | | व्यासः |
| ,, | 'सुवर्णमेकं गामेकां—' | | |
| ,, | 'देयस्य परिमाणेन—' | | |
| १२२ | 'यदि जीवति स स्तेनः—' | | संवर्तः |
| ,, | 'स्तेयं कृत्वा सुरां पीत्वा—' | | आपस्तम्बः |
| ,, | 'महापातकसंयुक्ताः—' | | अङ्गिराः |
| ,, | 'सुवर्णस्तेयी मासं—' | | सुमन्तुः |
| ,, | 'विद्यातपोभ्यां हीनेन—' | | |
| १२३ | 'अविद्वान् याजको वा स्यात्—' | | कात्यायनः |
| ,, | 'शुक्लं च शबलं चैव—' | | नारदः |
| ,, | 'धनं यद् यागशीलानां—' | | मनुः |
| ,, | 'किं ते कृण्वन्ति—' | मन्त्रवर्णः | |
| ,, | 'हिरण्यस्तेनः पतति—' | | शङ्खः |
| १२४ | 'मार्गं वा गोमूत्रयावकं—' | | |
| ,, | 'राजा स्तेनेन गन्तव्यो—' | | मनुः |

| पृष्ठं | वाक्यं | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १३२ | 'एतत् कृत्वा प्रतिलोमं—' | | |
| ,, | 'ब्राह्मणी ब्राह्मणं गत्वा—' | | संवर्तः |
| ,, | 'बलात् प्रमथ्य भुक्ता या—' | | हारीतः |
| १३३ | 'स्त्रियः पवित्रमतुलं—' | | |
| ,, | 'बलात्कारोपभुक्ता वा—' | | वसिष्ठः |
| ,, | 'पुष्पकालमुपासीत—' | | ,, |
| ,, | 'तस्या उक्तं प्रायश्चित्तं—' | | हारीतः |
| १३४ | 'न स्त्रीष्वगुरुतल्पं—' | | गौतमः |
| ,, | 'यत् पुंसः परदारेषु—' | | मनुः |
| ,, | 'यो येन पतितेनैषां—' | | ,, |
| १३५ | 'पतितस्य तु कुमारीं—' | | हारीतः |
| ,, | 'संवत्सरेण पतति—' | | मनुः |
| ,, | 'तैश्चाब्दं समाचरन्' | | |
| ,, | 'पञ्चमश्चाचरंस्तैः' | | |
| ,, | 'पतितसंप्रयोगे तु—' | | वसिष्ठः |
| १३६ | 'पतितसंव्यवहारिणो—' | | शङ्खः |
| ,, | 'तैश्च सह संप्रयोगश्च—' | | |
| ,, | 'पतितो ह्यात्मानमुद्धरेत्—' | | |
| ,, | 'एभिः संपर्कमायाति—' | | संवर्तः |
| ,, | 'संवत्सरेण पतति—' | | मनुः |
| ,, | 'सुवर्णस्तेयी मासं सावित्र्या—' | | सुमन्तुः |
| ,, | 'यश्चैतैः सह यौनमुख्य—' | | ,, |
| १३७ | 'पतितसंव्यवहारी तप्त—' | | शातातपः |
| ,, | 'यो येन पतितेनैषां—' | | मनुः |
| ,, | 'षण्मासमब्दमेकं वा' | | संवर्तः |
| १३८ | 'चण्डालान्त्यस्त्रियो गत्वा—' | | मनुः |
| ,, | 'संवत्सरेण पतति—' | | ,, |
| ,, | 'दिवाकीर्त्यमुदक्यां च—' | | ,, |
| ,, | 'गुर्वीसख्यादिगमने—' | | वसिष्ठः |
| ,, | 'एतदेव चण्डालपतिता—' | | ,, |
| ,, | 'भुक्त्वातोऽन्यतमस्यान्नं—' | | मनुः |
| ,, | 'अभिशस्तस्य षण्डस्य—' | | ,, |

| पृष्ठ | वाक्यं | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १३९ | 'कृच्छ्राब्दपादं चरेत्' | | वसिष्ठः |
| ,, | 'ज्ञानात् साम्यं तु गच्छति' | | मनुः |
| ,, | 'चण्डालसंकरे विप्रः—' | | संवर्तः |
| ,, | 'चण्डालश्वपाकपुल्कसादि—' | | काश्यपः |
| ,, | 'अगम्यागमने स्त्रीवध—' | | सुमन्तुः |
| ,, | 'अविज्ञातस्तु चण्डालो—' | | पराशरः |
| १४० | 'गोमूत्रं गोमयं क्षीरं— | | |
| ,, | 'चण्डालावर्जिते चाम्भे—' | | अत्रिः |
| १४१ | 'चण्डालपरिगृहीताः—' | | अङ्गिराः |
| ,, | 'भुक्त्वा तु प्रतिलोमानां—' | | अत्रिः |
| ,, | 'भुक्त्वातोऽन्यतमस्यान्नं—' | | मनुः |
| ,, | 'स्कन्नमभिमृशति भूपतये—' | शतपथः | |
| १४२ | 'सर्वेषामन्योन्यापकृष्ट—' | | शङ्खः |
| १४४ | 'पञ्चगव्येन वा मासं—' | | हारीतः |
| ,, | 'एतैर्व्रतैरपोहेयु—' | | मनुः |
| १४५ | 'उपपातकसंयुक्तो—' | | ,, |
| ,, | 'उपपातकसंयुक्तो—' | | आङ्गिरसः |
| १४६ | 'अनेन विधिना यस्तु—' | | |
| ,, | 'दक्षिणायामविद्यमा—' | | |
| ,, | 'गोघ्नः कुर्वीत संस्थानं—' | | संवर्तः |
| ,, | 'प्रायश्चित्तमकामावाप्तौ —' | | कश्यपः |
| ,, | 'ब्राह्मणेभ्यो निवेदयित्वा—' | | काश्यपः |
| ,, | 'तेन चर्मणा प्रावृतो—' | | ,, |
| १४७ | 'गोघ्नः पञ्चगव्या—' | | शङ्खः |
| ,, | 'गां चेद्धन्यात् तस्याः —' | | वसिष्ठः |
| ,, | 'गोघ्नो यवागूं —' | | पैठीनसिः |
| ,, | 'गोघ्नस्य गोष्ठे शयनं—' | | सुमन्तुः |
| ,, | 'पादप्राग्निबन्धाद्वा—' | | यमः |
| ,, | 'उपपातकसंयुक्तो—' | | आङ्गिरसः |
| ,, | 'गायत्र्या दशसाहस्र—' | | |
| ,, | 'गोसहस्रं शतं वापि—' | | |
| ,, | 'गां च वैश्यवत्' | | गौतमः |

| पृष्ठं | वाक्यं | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १४७ | 'प्राकृतं त्रैवार्षिकं—' | | गौतमः |
| ,, | 'द्वादशाहेन गोघाती—' | | बृहस्पतिः |
| १४८ | 'गायत्र्या दशसाहस्रं—' | | |
| ,, | 'द्वादशरात्रं पञ्चगव्या—' | | |
| ,, | 'त्रीन् कृच्छ्रान्—' | | शातातपः |
| ,, | 'गवां बन्धनयोक्त्रेषु—' | | पराशरः |
| ,, | 'सशिखं वपनं कृत्वा—' | | ,, |
| ,, | 'ततश्चीर्णान्ते ब्राह्मण—' | | |
| ,, | 'उपपातकिनस्त्वेवम्—' | | स्वयम्भूः |
| ,, | 'उपपातकसंयुक्तो—' | | ,, |
| १४९ | 'गोसहस्रं शतं वापि—' | | यमः |
| ,, | 'उपपातकसंयुक्तो—' | | |
| ,, | 'गोषु ब्राह्मणसंस्थासु—' | | |
| ,, | 'मारुताः पशवो याह्याः—' | | शङ्खः |
| ,, | 'गां च वैश्यवत्—' | | गौतमः |
| ,, | 'मार्जारनकुलौ हत्वा—' | स्वायम्भुवम् | |
| १५० | 'मण्डूकनकुलकाक—' | | गौतमः |
| ,, | 'एतदेव व्रतं कृत्स्नं—' | | मनुः |
| ,, | 'शूद्रवधे संवत्सरं—' | | गौतमः |
| ,, | 'नाततायिवधे प्राय—' | | सुमन्तुः |
| ,, | 'गवां बन्धनयोक्त्रेषु—' | | पराशरः |
| १५१ | 'प्रायश्चित्तीयतां प्राप्य—' | | |
| ,, | 'सार्धं संगोपनार्थाय—' | | |
| ,, | 'औषधं स्नेहमाहारं—' | | |
| ,, | 'निरुद्धानां गृहे वापि—' | | |
| ,, | 'एकश्चेद् बहुभिः कश्चिद्—' | | संवर्तः |
| ,, | 'गोघ्नस्यापि प्रवक्ष्यामि—' | | ,, |
| १५२ | 'पादपाशनिबन्धाद्वा—' | | यमः |
| ,, | 'गोमूत्रयावकं मास—' | | ,, |
| ,, | 'उपपातकसंयुक्तो—' | | ,, |
| ,, | 'गोसहस्रं शतं वापि—' | | ,, |
| ,, | 'द्वादशाहेन गोघाती' | | बृहस्पतिः |

| पृष्ठं | वाक्यं | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १५७ | 'पञ्चाशद् ब्राह्मणो दण्ड्यः—' | | |
| ,, | 'एकजातिर्द्विजातिं तु—' | | मनुः |
| १५८ | 'भर्तारं लङ्घयेद् या तु—' | | गौतमः |
| ,, | 'श्वभिः खादयेद् राजा—' | | |
| ,, | 'वाग्दैवत्यैश्च चरुभिः—' | | |
| ,, | 'न च वै स्त्रियं घ्नन्ति—' | आम्नायः स्वायम्भुवम् | |
| ,, | 'बालघ्नांश्च कृतघ्नांश्च' | | बृहस्पतिः |
| १५९ | 'निकृष्टजां तु निर्ज्ञातां—' | | वसिष्ठः |
| ,, | 'अनात्रेयीं राजन्यहिंसायां—' | | मनुः |
| ,, | 'कृत्वा च स्त्रीसुहृद्वधम्' | | आङ्गिरसः |
| ,, | 'आहिताग्नेर्द्विजाग्र्यस्य—' | | शङ्खः |
| ,, | 'स्त्रीघाती षण्मासान्—' | | |
| ,, | 'स्त्रीणां वधे शूद्र—' | | आङ्गिरसः |
| ,, | 'अनाहिताग्निपत्नीनां—' | | संवर्तः |
| ,, | 'स्त्रियं प्रमापयेद् यस्तु—' | | गौतमः |
| १६० | 'अनस्थामनड्वारः' | | मनुः |
| | 'पूर्णे चानस्यनस्थाम्' | | ,, |
| ,, | 'योऽहिंसकानि भूतानि—' | | स्वयम्भूः |
| ,, | 'पञ्च सूना गृहस्थस्य—' | | मनुः |
| १६१ | 'मार्जारनकुलौ हत्वा—' | | ,, |
| ,, | 'पयः पिबेत् त्रिरात्रं वा—' | | |
| | 'आग्नेनैव न संमिध्येद्— —' | | व्यासः |
| ,, | 'यज्ञार्थप्राणिहिंसायां—' | | अङ्गिराः |
| ,, | 'गजे व्याघ्रे च तुरगे—' | | |
| ,, | 'मयुर्मयूरो गोमायुः—' | नामरत्नमाला | |
| ,, | 'हंसं ससारसं क्रौञ्चं—' | | |
| १६२ | 'चापं भासं कपोतं वा—' | | पराशरः |
| ,, | 'गृध्रं श्येनं श्वाविडं च—' | | |
| ,, | 'श्वमार्जारनकुलदद्दुर—' | | |
| ,, | 'निपात्य वैश्यं वृत्तस्थम्' | | वसिष्ठः |
| १६३ | 'महापातकिनश्चैव—' | | मनुः |

| पृष्ठं | वाक्यं | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १६३ | 'दानेन वधनिर्णेकं—' | | मनुः |
| १६४ | 'नरवायसखरवानर—' | | शङ्खः |
| ,, | 'यन्मेऽद्य रेतः पृथिवी—' | शतपथः | |
| ,, | 'पुनर्मां मैत्विन्द्रियम्' | ,, | |
| १६५ | 'मयि तेजः' | ,, | |
| ,, | 'कामावकीर्णोऽस्मि' | | |
| ,, | 'कामाभिद्रुग्धोऽस्मि' | | |
| ,, | 'सं मा सिञ्चन्तु मरुतः' | तैत्तिरीयम् | |
| ,, | 'सन्ध्यां यदि च नोपास्ते—' | स्मृत्यन्तरम् | |
| ,, | 'व्रतचारी तु योऽश्नीयाद्—' | | मनुः |
| १६७ | 'ब्राह्मणमनृतेनाभिशस्य—' | | वसिष्ठः |
| ,, | 'एतेनाभिशस्तो व्याख्यातः' | | ,, |
| १६८ | 'जप्त्वा तु त्रीणि सावित्र्याः—' | | मनुः |
| १६९ | 'पतितस्योदकं छेद्यं—' | | |
| ,, | 'चरितव्रत आयाते—' | | मनुः |
| १७० | 'एष एव विधिः कार्यो—' | स्वायम्भुवम् | ,, |
| १७१ | 'एतैर्द्विजातयः शोध्याः—' | | |
| ,, | 'ख्यापनेनानुतापेन—' | | मनुः |
| ,, | 'धर्मव्याजेन यो मोहात्—' | स्मृत्यन्तरम् | ,, |
| १७२ | 'त्र्यहं तूपवसेद्युक्त—' | | |
| १७३ | 'यद् देवा देवहेडनम्' | तैत्तिरीयम् | स्वयम्भूः |
| ,, | 'नाभिदघ्नोदकस्थस्तु—' | | |
| ,, | 'सहस्रशीर्षा पुरुषः' | | भारद्वाजः |
| ,, | 'लोमभ्यः स्वाहा' | | |
| ,, | 'यस्मिन् कर्मण्यस्य कृते—' | | स्वयम्भूः |
| १७६ | 'धारोष्णं तु गव्यं—' | | हारीतः |
| ,, | 'पयो घृतमुदकं—' | स्मृत्यन्तरम् | |
| १७७ | 'एकैकं ग्रासमश्नीयात्' | | मनुः |
| १७८ | 'पिपीलिकामध्यतया—' | स्मृत्यन्तरम् | |

# READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Sri Râma Varma Mahârâjah. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः (Kavya) Syâmandûrapuravarnanaprabandha by H. H. Svâti Sri Râma Varma Mahârâjah, with the commentary Sundarī of Râjarâja Varma Koil Tampurân. | 2 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna (Second Edition). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nilakantha Dikshita. | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvati | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedanta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | |
| No. 10—मातङ्गलीला (Gajalakshana) by Nilakantha. | 0 | 8 | |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 0 | |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Niti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I. 1st & 2nd Kândas). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakra kavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I. 1st & 2nd Sargas). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II. 3rd Kânda). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III. 4th, 5th & 6th Kândas). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd, 4th & 5th Sargas) | 2 | 8 | |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dipaprabhâ of Nârâyana. | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopinâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III, 6th, 7th & 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvasva of Vandyaghatiya Sarvânanda (Part I. 1st Kânda). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Sri Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Apastamba with Vivarana of Sri Sankara Bhagavat Pâda. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswamin and Tikâsarvasva of Vandyaghatiya Sarvânanda (Part II, 2nd Kânda 1—6 Vargas). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Sri Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya). | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nilakantha Dikshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Sri Krishnânanda Sarasvati. (Part I.) | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II.) | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः (Alankâra) by Singa Bhûpâla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tikâsarvaswa of Vandyaghatîya Sarvânanda (Part III. 2nd Kânda 7—10 Vargas) | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvaswa of Vandyaghatîya Sarvânanda (Part IV. 3rd Kânda) | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः (Vedânta) by Prakâsâtmayatindra | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana) | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Sri Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Sri Krishnânanda Saraswatî (Part III.) | 2 | 0 | 0 |
| No. 59—नागानन्दम् (Nâtaka) by Sriharshadeva with the commentary Nâgânandavimarsinî of Sivarâma. | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः (Stuti) by Sri Laghubhattâraka with the commentary of Sri Râghavânanda | 0 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 74— श्रीयाज्ञवल्क्यस्मृतिः (Dharmasâstra) with the commentary Bâlakrîdâ of Visvarûpâchârya. (Part I—Âchâra and Vyavahâra Adhyâyas) | 4 | 0 | 0 |
| No. 75—शिल्परत्नम् (Silpa) by Srîkumâra (Part I). | 3 | 4 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः (Part II). | 3 | 4 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः by Isanasivagurudeva-misra (Part III. Kriyapada 1—30 Patalas). | 3 | 4 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् with the commentary Anavila of Haradattacharya. | 5 | 0 | 0 |
| No. 79—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part I—1 & 2 Adhikaranas). | 8 | 0 | 0 |
| No. 80—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part II—3 to 7 Adhikaranas). | 8 | [illegible] | 0 |
| No. 81— श्रीयाज्ञवल्क्यस्मृतिः (Dharmasastra) with the commentary Bâlakrîda of Visvarûpâchârya (Part II. Prâyaschittâdhyâya) | 3 | 12 | 0 |

***Apply to:—***

*The Curator,*

*for the publication of Sanskrit Manuscripts,*

*Trivandrum.*